# श्राद्धकाशिकास्थ विषयाणां निर्घण्टपत्रम् ॥


BHARATIYA VIDYA BHAVAN
S. N.
LIBRARY

इति श्री गौड़वंशावतंसेन घनश्याम शर्म्मणा आत्मजेन श्री प्रभुदत्तशर्म्मणा श्राद्ध कारिकाया. सूचन पत्रँव्विरच्यमुद्रितम् ।



# कात्यायन विरचितं श्राद्धसूत्रम् ।

## काशिकाव्याख्यासंवलितम् ।

प्रथमाकण्डिका ।

श्रीगणेशाय नमः ।

यस्य प्रसादपयसा क्रतुपादपास्तं कात्यायनं मुनिवरं शिरसाभिवन्दे ॥ सिक्ताः फलन्ति यजुषामिह याजकानां स्वर्गोद्भवानि विविधानि फलान्यजस्रम्॥१॥कर्कोऽव्याख्यदिदं(१)गभीरवचनैःसूत्रं यतोस्मादभूद्दुर्बोधञ्च ततोहलायुधइति व्याख्यातथाप्यस्फुटम ॥ भूयोपिप्रतिषेधकारिवचनैः स्मार्तैर्मयाकाशिका सूत्रस्योपरिसंशयौघतिमिरध्वंसाय संतन्यते ॥ २ ॥ सूत्रार्थव्यञ्जनाद्वाक्यविशेषोक्तिप्रकाशनात् ॥ अस्यान्वर्थमिदंनाम ग्रन्थस्यश्राद्धकाशिका ॥ ३ ॥ नित्यानन्दइतीहयाज्ञिकवरो जातस्तदीयःसुत. स्मार्त्ताग्नौविदितक्रियोतिसुख इत्याख्योजगत्यद्भुतः ॥ तत्पुत्रोप्यभवत्स्मृतिष्ठु चतुरः शास्त्रेष्वधीतीच्युतो विष्णुर्मिश्रइमन्निबन्धमकरोत्कृष्णःकृतीतरसुत. ॥ ४ ॥ तत्रपूर्वां पौर्णमासीमुत्तरांवोपवसेदित्यादिना श्रौतकर्माण्युपदिश्य अथातोगृह्यस्थालीपाकानामित्यादिना स्मार्तान्यथाम्नायावशिष्टम् श्राद्धकर्मवक्तव्यमिति सूत्रमारभते ॥

### * अपरपक्षेश्राद्धङ्कुर्वीत ॥ १ ॥

॥ अपरपक्षः । कृष्णपक्षः चांद्रमासेशुक्लकृष्णपक्षयोः पूर्वापरत्वसंभवात् ॥ श्राद्धमितिपिंडप्रदानंकर्म । कुर्वीतेतिविधा-

(१) गम्भीर इति खपुस्तक पाठ निम्न गभीर गम्भीर मित्यमरोक्तेः

यत्कपदं ननुत्रिपदमिदंसूत्रं तत्रपदत्रयैक्यकत्वमनुपपन्नं तथाहि प्रौष्ठपद्यामपरपक्षे मासिमासिचैवमिति शौनकः ॥ अनेनविधिनाश्राद्धं त्रिरब्दस्येहनिर्वपेत् । हेमंतग्रीष्मवर्षासु पांच याज्ञियमन्वहमिति मनुः ॥ कन्याकुम्भवृषस्थेर्के कृष्णापक्षेषु सर्वदेति मात्स्यं । यत्तु वचनैःसर्वापरपक्षेषु कर्त्तव्यतोपदेशात् ॥ तथाप्ययुक्तपक्षेतु श्राद्धंकुर्याद्दिनेदिनइतिवचनात् प्रतिदिनकर्तव्यतया श्राद्धानीतिवक्तुमुचितत्वात् । ब्राह्मणादि चातुर्वर्ण्यापेक्षया कुर्वीरन्निितिवक्तुमौचित्याच्चेति भतश्चापरपक्षेषु श्राद्धानिकुर्वीरन्निितिसूत्रमुपशेतव्यम् अत्रोच्यते अपरपक्षेष्विनिबहुत्वमुपपन्नमितियदुक्तं तन्न तथासति सर्वसामान्येनास्यापरपक्षस्यवैशिष्ट्यानुपपत्तेः । तथाच पुराणसमुच्चये । पक्षौ शुक्लपदे पक्षौ प्रत्पक्षापरेस्मृताः । तेषां मुख्यतमःपक्षः भाषाढ्याःपंचमस्तुयइत्यादि । यदपि श्राद्धानीतिवक्तुमुचितमिति तन्न तथासत्येकोद्दिष्ट पार्वण नित्यश्राद्धादीनि प्राप्नुयुस्तन्माभूदिति पार्वणपरत्वेन वचनमुक्तम् ॥ तथाचोक्तम् । कन्यागते सवितरि दिनानि दश पंचच ॥ पार्वणेनैवविधिना तत्रश्राद्धंविधीयतइति नन्वेतदैक्यं पार्वणत्वे चतुर्दश्यादौपार्वणादिनिषेधस्य कागतिरितिचेन्न तस्यश्राद्धपक्षव्यतिरिक्तश्राद्धेषु त्रिभागादिपक्षविभागेषु चतुर्दश्यांपार्वण निषेधस्यपर्यवसानात् मनुरपि कृष्णपक्षेदशम्यादौ वर्जयित्वाचतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयो यथैतानतथेतराः । पक्षश्राद्धे तु कृष्णाजिनिः नभस्यस्यापरेपक्षे श्राद्धं कार्यंदिनेदिने नैवनन्दादिवर्ज्यंस्यान्नैववर्ज्या चतुर्दशीति यदपि चातुर्वर्ण्यापेक्षयाकुर्वीरन्निति तदपिन तथासत्यक्तानधिकृतानामधिकारःस्यात्तन्माभूदितिकुर्वीतेत्यधि कारि

विशेषणेनैक्यमुक्तम्। ततश्च सर्वापरपक्षेषुष्टेमन्तग्रीष्मवर्षापरपक्षा-
न्तेषु कन्याकुम्भवृषस्थेर्केनय: तत्रापिभाद्रपदापरपक्ष: मुख्यतम:
कालस्तत्रपार्वणमधिकारीकुर्यादितिसिद्धम्। एवंसतिकालान्तरा
नुपदेशादमावास्यादौ श्राद्धंनस्यादितिचेत्। अपरपक्षशब्दस्योप-
लक्षणतया तत्संग्रहीयपत्ते:। नन्वेवमपिकृष्णपक्षइतिवाच्येऽपर-
पक्षइतिगौरवंकिमर्थम्॥ पित्र्यकर्मणिप्रतिपदादौ चान्द्रमसोग्रहार-
यज्ञापनार्थमित्यदोष: तथाचोक्तं। आब्दिकेपितृकृत्येच मासश्चा-
न्द्र:प्रशस्यते। तथा सौरमासोविवाहादौ यज्ञादौसावन:स्मृत:।
पार्वणेचाष्टकाश्राद्धे चान्द्रोमासोमहालयइति। बृहस्पतिरपि रवे-
रभ्युदयेमानं चन्द्रस्यपितृकर्मणि। तथा तथैवपितृकृत्यादौ मास-
श्चान्द्रमस:स्मृत:। अपिच विवाहादौस्मृत:सौरो यज्ञादौसावन:
स्मृत: शेषकर्मसु चान्द्र:स्यादेषमासविधि:स्मृतइति। अत्रैत-
च्चिन्त्यते। किम्पक्षश्राद्धंनित्यं काम्यंवेति। तत्रकाम्यमित्येके।
नाश्नन्ति पितरस्त्वेति ज्ञात्वामनसियोनर:। पक्षश्राद्धं नकुरुते त-
स्यरक्तम्पिबंतिते इत्यकरणेप्रत्यवायश्रवणात्। शाकेनापि नापरं
पक्षमतिक्रामेदितिसूत्राच्च नित्यमित्यन्ये। नोभयं। पितृगाथा स-
देवात्र गीयते ब्रह्मवादिभि: ॥ कदान:संततावग्र्य: सकश्चि
द्भवितासुत:। पितृपक्षे सदाश्राद्धं पूर्णपक्षं प्रदास्यतीत्यादिना
तम्प्रतीक्षामहेसर्वे सुतृप्तिसिवकार्यक:। काम्यदायीभवेत्कश्चि
त्कुलेऽस्मत्काङ्क्षतेनरइत्यादिना काम्यत्वस्याप्रतीते:। तस्मादु
भयरूपत्वंयुक्तम्। तत्रनित्यकाम्ययो: सङ्कटेकाम्यस्यप्रबलत्वा-
न्नित्यप्रसङ्गात्सिध्यतीति न्यायाच्च काम्यानुष्ठानेनैव नित्यस्यापि-
सिद्धि:। तथाचसङ्कृत्कृत्। काम्यतंत्रेणनित्यस्य:तन्त्रश्राद्ध-

श्राद्धं कुर्यादतंद्रितः पिण्डदानन्नकुर्वीत तद्वमात्त्रयवासरे ॥ वैशाखसात्तृतीयायां नवम्यांकार्तिकस्य च श्राद्धं संक्रांतिवत्कुर्यात् पिंडनिर्वपणाद्विना। युगादौपितृनक्षत्रे तथाम न्वन्तरादिषु। अर्घपिंडन्नकुर्वीत वैशाखंश्राद्धमाचरेदित्यादीनि वाक्यान्यनर्थकानि स्युरितिचेत्सत्यं एतानिवाक्यानि तिथिवारनक्षत्रसंक्रान्ति युगादिनिमित्तनियमाणे षु काम्यश्राद्धेषुपिण्डदानंनिषेधन्ति। नंपुनः पक्षश्राद्धतिथ्याश्रयादिनिमित्तश्राद्धेष्वितिविरोधः। अन्यथावारेपातेच सङ्क्रान्तावित्यादिभिर्विरोधात् (१) अथ पार्वणेन वविधिरेवयुक्तं॥ तत्र काम्यार्वणं किंवाद्विपार्वणम् उनचतुःपार्वणम्वेति पक्षश्राद्धे त्रिपार्वणेकोद्दिष्टयोरप्राप्तत्वात् सर्वं त्रापिपार्वणधर्मत्वात्स्मृत्याणांविहितत्वाच्चेति। तथाह्येकपार्वणे मात्स्यं। ततः प्रभृतिसंक्रान्तावुपरागादिकर्मसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टंमृतेऽहनि। प्रजापतिरपि। संक्रांतावुपरागेच सर्वोत्सवमहालये निर्वपेत् पिण्डत्रितयमितिमाहप्रजापतिरिति। द्विपार्वणेतु कात्यायनः कार्यं समन्वितंमुक्ता तथाद्यंश्राद्धषोडशं प्रत्याब्दिकंविशेषेषु पिण्डाःस्युःषडितिस्थितिरिति। चतुः पार्वणेतु कात्यायनः। कुर्याद्दादशदैवत्यम् प्रेतपक्षेतु सर्वदा। यथातीर्थेगयायाञ्चएषधर्मः सनातनः। आदौपितातत्तोमातातत्तोमातामहस्तथा। मातामह्यस्ततोदद्यात्प्रेतपक्षेतुसर्वदा॥ सुमंतुः। पितृभ्यःप्रथमन्दद्यान्मातृभ्य-

(१) किंश्राद्धं साग्निकस्यैवाधिकारःउत्तनिरग्निकस्यापीत्यत्रकर्कोपाध्यायनिर्णीतिमग्नौकरणरूपसांगस्याग्न्यधिकरणत्वात्तदुपसहारेसाग्निकस्य वशान्निरग्नस्य नपैतृयज्ञियोहोमौलौकिकेग्नौविधीयतइतिनिषेधात् तत्रचदारसग्रहपूर्वककार्यावसथ्याधानतत्पूर्विकाद्यकर्मान्तरेप्रवृत्तिरित्यतोपिनानग्निमतोधिकारइतियतूक्तं अन्यभ्रवेतुविप्रस्य पाणेवैवोपपादयेदिति तदप्यत्रतावसथ्याभ्युदयिकविषयं अनग्निमतोपिश्राद्धे धि-

स्तदनन्तरम् ॥ ततोमातामहेभ्यश्चतत्पत्नीभ्यस्तथैवच ॥ गया-याञ्चतथातीर्थेप्रेतपक्षेविशेषतः। कुर्याद्द्वादशदैवत्यमेकोद्दिष्टमतः परं। एवञ्चनविप्रतिपत्त्याउच्यते। तत्रैकपार्वणञ्चतु.पार्वणयोर्व्याक्रममाष्टनवमीविषयत्वेनपरिशेष्या द्विपार्वणमेथपक्षश्राद्धेव्यवतिष्ठते। तथाच हद्धयाज्ञवल्क्यः। पितापितामहश्चैवतथैवप्रपितामहः॥ समीहन्तेसुतान्सर्वे मातृपक्षेविशेषतः॥ सुजन्ति-विमक्तायेपुपितरोन्तर्हिता.सदा॥ तस्माद्विमान्पितृन्विद्यात्पितृवत्तान्प्रपूजयेत्। द्विपार्वणमकर्त्तव्यंविनाश्राद्धक्षयेऽहनि। पितरोयत्रपूज्यन्तेतत्रमातामहादयः॥ अविशेषेणकर्त्तव्यं विशेषान्नरकम्ब्रजेदितिकात्यायनवचनात्। व्यासोपि॥ पितृमातामहश्राद्धैर्द्विजश्राद्धेनतर्पयेदिति। पुलस्त्य.। मातुःपितरमारभ्य त्रयोमातामहाःस्मृताः। तेषान्तु पितृवच्छ्राद्धंकुर्युर्दुहितृसूनवइति। स्कान्दे। पार्वणंकुरुते यस्तुकेवलम् पितृहेतुतः। मातामहन्नकुरुते पितृहासोपिजायत इति। सूत्रकारोपि। चीस्त्रीन्पितामहानिति। एकचतुःपार्वणोत्वष्टाहनवमीविषये। तथाचपाराशरः॥ पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम्। सर्वत्रानेकगोत्राणा मेकस्यैवस्ततेऽहनि॥ नवम्यान्तु हद्धयाज्ञवल्क्यः। गयायां पुष्करेचैवतथैवान्वष्टकासुच॥ पितृमुख्येनकर्त्तव्यम् पार्वणानाञ्च-

---

कारत्वेयं विधाप्रसिद्धिसुरह्रवटेयत्तो यमनोलिखदमनिश्चितेतिनामग्निमत श्राद्धाधिकारेप्रमाणमिति तदिदमनुपपन्नं नित्यनैमित्तिकेषुहि यथाशक्त्यातथाकुर्यादितिन्यायात्सर्वांगोपसंहारा शक्तस्याप्यधिकारात् अन्यभावेतुपाणौहोमविधानात् अस्यविधानस्यचोक्तविषयविशेषव्यवस्थाया प्रमाणशून्यत्वात् सतिचाग्नौकरणरहितानित्याधानितेष्वधिकारानिहत्त च स्त्रीशूद्रानुपनीतानामपिश्राद्धेऽपि देशात्साग्निकानग्निकोभयाधिकारिणविहितश्राद्धमितिसिद्धम्॥

तुष्टयमिति । नन्वेवमन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ॥ पित्रादि मातमध्यन्त स्ततोमातामहान्तकमित्यादि वच नविहितम् नवदैवत्यम्विरुध्येत । मैवं । अन्वष्टकास्विति बहुत्वश्रुतिरपेक्षर्यसमानात् साग्निकर्तृकान्नवदैवत्यमन्वष्टकात्रये तद्वचनविहितुमर्हति नापरपक्षनवमीविषयम् । अतोद्वादशदैवत्यमपरपक्षनवमीविषयमितिसिद्धम् ॥ अन्यथा नवदैवत्ये मातृणां पृथक्त्वेन मातामह्यादीनामपृथक्त्वे चार्द्धजरतीयापत्तेः । तथाच पुराणसमुच्चये । सर्वासामेवमातृणां श्राद्धं कन्यागतेरवौ ॥ नवम्याञ्चप्रदातव्यम् भक्त्यालब्धवरायतः । पितमातृकुलेनार्यो या.काश्चित्मृतास्त्रियः ॥ श्राद्धार्हा मातरो ज्ञेया स्तासांश्राद्धम् प्रदापयेत् । इष्टौतुमातृपूर्वं हि श्राद्धङ्कुर्वीत बुद्धिमान् । अन्वष्टकासु नवासु पितृपूर्वं समाचरेत् ॥ तामिस्रपक्षे नवमी यापुण्यातुनभस्यके । चत्वारःपार्वणाःकार्याः पितृपूर्वामनोषिभिः ॥ पितृणांतु त्रयः पिण्डा मातृपूर्वास्तथात्रयः । मातामहानामप्येवं त्रयोमातामहीषुच । एवंकुर्वन् ततः श्राद्धम् मातृणाञ्चनदोषभाक् ॥ भवत्येवनरोविप्रा इति मत्स्यपुराणवचनादिति । कात्यायनोपि । नवानांनवकं दृष्टौ तथैवाऽष्टकेविदुः ॥ कुर्याद्द्वादशदैवत्यम् प्रेतेतीर्थेगयासुच । तथा उपप्लवेचन्द्रमसोरवेदृष्टेगयायां गमनागमेषु । अन्वष्टकायांच महोत्सवेषु श्राद्धंक्रियाद्वादशदैवतास्यात् ॥ इदयाज्ञवल्क्योपि ॥ गयायांच कुरुक्षेत्रे राहुग्रस्तेदिवाकरे ॥ कुर्याद्द्वादशदैवत्यं पार्वणानां चतुष्टयमिति । ननु दिनान्निदशपञ्चवेश्वच तिथिषोडशकप्रतिविरोधः । तथाच शाटायन. । नभस्यस्यापरेपक्षे तिथिषोडशकन्तुयत्।कन्यागतान्वि

तं चेत्स्या त्सकाल:पितृकर्मसु । ब्रह्माण्डेपि । कन्यागते सवितरि यान्यहानितु षोडश । क्रतुभिस्तानितुल्यानि देवदत्तन्तथाक्षयं । कन्यागतएकदेशेपि । तथाच कार्ष्णाजिनि: । आदौमध्येवसानेवा यत्रकन्यांव्रजेद्रवि: ॥ सपक्ष:सकल: पूज्यो श्राद्धषोडशकंप्रतीति-चेत् । उच्यते । द्वादशकपालेष्वष्टाकपालवत् । षोडशदिनेषु पंच-दशदिनानुवाद इत्यविरोध: । श्राद्धषोडशकेतु सन्देह: । तत्र केशुक्लप्रतिपद्दोसह तिथिषोडशकमाहु: । तथाच देवल: । अह: षोडशकं यत्तु शुक्लप्रतिपदासह । चन्द्रक्षयाविशेषेण साभिद र्शात्मकास्मृतेति । तत्र शुक्लप्रतिपदो दौहित्रकर्तृक मातामहश्राद्धविषयत्वात् । तथाच मातृणांनवमीयद्वतानांच चतुर्दशी तद्वन्मातामहानांच शुक्लेप्रतिपत्स्मृतेति । अन्येतु तिथिवृद्धिविषयं । श्राद्धषोडशकमिति । तदपिन तथासति वृद्धिक्षयो: पंचदश सप्तदश श्राद्धसंभवा त्षोडशकविधिबाधापत्ते: । तथाचैवंपठन्ति । तिथय:पंचदशस्यु: प्रेतपक्षेतुषोडश । अनुमत्यादिकंकुर्यात् पितृणां दत्तमक्षयं ॥ नात: पञ्चदशेकुर्यान् नात: सप्तदशेतथा । ऊनेतु नरकं यान्ति ह्याधिकेषग्राहनक्षय इति । तस्मात्वृद्धिक्षयोरभावे षोडशश्राद्धविधिरितिचेत् । तथासति श्राद्धषोडकस्य कदाचित्कत्वेन नित्यत्वानुपपत्ते: । अत: प्रौष्ठपदीमारभ्य वृद्धौप्रतिपदमभिव्याप्य हृद्यौर्व्द्धि:कृत्य श्राद्धषोडशकं कर्त्तव्यमितिव्यवस्था युक्ता । एवंतर्हि प्रतिपदो दौहित्रविषयत्वमित्युक्ति विरुध्येत । तत्वृद्धिविषयत्वात् तयाषोडशपूरणोपपत्ते: यद्वा एकाहे तिथिद्वयसंबन्धे श्राद्धद्वयकरणा त्षोडशपूरणात् । ततश्चोभयथापि प्रौष्ठपद्यामारभ्य: । तथाचमनु: ॥ पूर्णिमाप्रभृति श्राद्धम्

त्तस्मात्कुर्याद्विचक्षणः। दिनेदिने यज्ञफलं लभते श्राद्धदोनरः॥ ब्रह्मांडेपि॥ श्राद्धञ्च पूर्णिमायांचकृत्वापूर्वफलं लभेत्। प्रतिपदा-र्थलाभाय द्वितीयायांयथापरे॥ पुराणसमुच्चयेपि। प्रशस्ता पौ-र्णिमा सुख्या तिथयः षोडशैवताः। यथातिलानांतैलञ्च तुल्यंवै प्रत्नेतन्नृणयोः। पौर्णिमाया अमायाञ्च समम्पुण्यफलंद्वयोः। पूर्णे पक्षे नभस्यस्यतिथिः पूर्णाप्रशस्यते। अस्यांदत्ते पितॄणांवै तृप्तिः सांवत्सरीभवेत्। अमायांश्राद्ध कृच्चैव सर्वान्कामानवाप्नु-यात्। पूर्वापराह्णयोः रन्तेयः श्राद्धं कुरुतेनरः। नभस्यस्यद्विजश्रे-ष्ठाः पितरस्तेनपुत्रिणः। पौर्वाह्णिकौ पौर्णमासीश्चमाचैवापरा-ह्णिकीति। इदयाच्च वल्कोपि। कामिकतिथियत्तव्यं श्राद्धका-मैर्द्विजादिभिः। पूर्णिमाश्राद्धदानेन सम्पूर्णं फलमश्नुते। कुर्वंन्वै प्रतिपच्छ्राद्ध म्नमभौमसमश्नुते। इत्यादिषोडशकाम। वायुपुरा णेपि। पुष्टि प्रजां स्मृतिंमेधामित्याद्युपक्रम्य पौर्णमासमा द्यमा वास्यांतं तिथिषोडशकमुक्तमित्यलं। ननु श्राद्धम् पिंडप्रदानंक-र्मेति कथमुक्तं स्मृतिष्वनेकधाश्राद्धशब्दप्रयोगात् तथाहि। श्राद्ध-भुगग्रवर्जयेत्। श्राद्धभुक् प्रातरुत्थाय चपिबात् सकलेजगु भेज-येद्वाह्मणोगिन इत्यादिनाभोजने। श्रद्धास्ति यतरच्छ्राद्धम्। प्रज्ञा-श्रद्धार्थी इतिभोणः। श्रद्धयादीयते यस्माच्छ्राद्धंतेन निगदातस्मृति पाणिन्यादिवचनाच्छ्रद्धायोगे। अौत्सीर्ष्यिपडदानवनैश्वद्दद्यात्। नन्दायांभार्गवदिने त्रयोदश्यां त्रिजन्मनि तेषुश्राद्धंनकुर्वीते त्यादि वचना त्पिण्डदानेवा। अथैतन्मनुः श्राद्धशब्दः धर्मप्रोवा वाचेत्यादिनाकर्मणि। एवंविप्रतिपत्तौ पिण्डदानस्य प्राधा न्यात्तद्दानेशत्तनोर्द्धसोत्थानाच्च गयादौ पिंडदानंश्राद्धम्। ब्राह्मणपरीक्षायश्राद्धपाङ्क्तेय भोजने दोषश्रवणात् पिण्डदा

हित्वेऽपि श्राद्धसम्भवाच्च युगादौब्राह्मणभोजनमेवश्राद्धं दर्शा
दौतूभयसमुच्चयश्राद्धमित्येके तदन्येनक्षमते । अव्या-
प्त्यादि दोषपराहतेः अष्टकादौयत द्रव्यादावव्यापकत्वाच्च ।
तदपिन । तथासति हेतुकत्वसंभवे कल्पनागौरवकल्पेः ।
अथैतन्मनुः । श्राद्धपदकर्मेतिस्यात्तवैयर्थ्यं । तथाचोक्तं ।
पुराणंमानवोधर्मः सांगोवेदश्चिकित्सितम् । आज्ञासिद्धानि
चत्वारि नहन्तव्यानिहेतुभिरिति । तस्मात्सर्वत्रकर्मत्वाविशेषा
दाम्नायभेदेन कर्मव्यवस्थायत्ता । तथाच धर्मप्रदीपे यजुषां
पिण्डदानन्तु बहृचांद्विजतर्पणम् । श्राद्धशब्दाभिधेयंस्यादुभयंसाम
वेदिनामिति । आपस्तंबोपि । श्राद्धशब्दः कर्मप्रोवाच पितरो
देवता ब्राह्मणस्त्वाहवनीयार्थमिति । देवतोद्देशेनयथाह
वनीयेहोमस्तथापित्रुद्देशेन ब्राह्मणेदत्तंश्राद्धमित्यर्थः । ततश्च
कर्मैवोपपन्नमिति । तथाच ब्रह्माण्डे । देशेकालेचपात्रेच
श्रद्धयाविधानाचयत् । पितृनुद्दिश्य विप्रेभ्योदत्तं श्राद्धमु-
दाहृतमिति । मरीचिरपि । प्रेतंपितृंश्च उद्दिश्य भोज्यं
यत्प्रियमात्मनः । श्रद्धया दीयते यत्र तच्छ्राद्धं सम्प्रकीर्त्तित-
मिति । हद्याज्ञवल्क्योपि । पात्रं पत्नी विधिः श्रद्धा देशः कालः
क्षमा दया । एतद्देशोच्यतेश्राद्धं हविः कर्तृसमन्वितमिति ।
यद्वैकत्र पारिभाषिक मितरत्रौपचारिकम् । तथाच श्रीधर
पद्धतौ । होमश्च पिंडदानंच तथाब्राह्मणभोजनम् । श्राद्धश-
ब्दाभिधानंस्या देकस्मिन्नौपचारिकम् । प्रयोगाद्दृश्यतेलोके नि-
यमस्तु त्वयेसतीति । प्राधान्यप्रयोजनं यदकरणेऽभ्यावृत्तिः ।
प्रधानस्याक्रियायत्र सांगंतत्क्रियते पुनरितिवचनात् । यदुक्तं
प्रतिपदि दौहित्रकर्तृकश्राद्धविषयत्वमिति । तत्रकिंजीवत्पि-

तृको दौहित्रः उतमृतपितृकइति उभयथाप्रतिक्रमः। तथाच। जातमात्रस्तुदौहित्रो विद्यमानेपि मातुले। कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विनेसिते। नन्वेवं त्रिपिण्डं षट्पिण्डं वा उच्यते। पित्रादित्रिके जीवति त्रिपिण्डं स्मृतेमृत्तरमिति। तथाचकात्यायनः। मातामहानांदातव्यं प्रतिपद्येवमुख्यकं। त्रिकंहित्वाप्रयत्नेन श्राद्धंकुर्यात्सपिंडकम्। गौतमोपि। मातृपक्षे मृतानाञ्च देयंभक्त्या तु मुख्यकम्। सर्वेषां पावनं कुर्यात् यथाशक्त्यातु पिंडदः। जातमात्रस्तु दौहित्रो विद्यमानेषु पार्वणम्। कुर्यान्मातामहश्राद्धं प्रतिपद्येवसर्वदेति। मृतपित्रादि त्रिकेतु गोभिलः। मातामहानां प्रतिपद्दौहित्रः स्वयमाचरेत्। तत्रपित्रे स्वयन्देयं विशेषान्नोतिरिष्यते। प्रतिपत्प्रतिपक्षाद्धं पित्रइति पितामहादुपलक्षणम्। प्रत्यक्षपितरन्त्यक्त्वा ह्यन्यथातु ददातियः। सयाति नरकं घोरं यावद्भूसागरानगा इति। मृते पित्रादित्रिके पितृपङ्क्तिपरित्यागेन। प्रत्यवायजनकत्वात्। पञ्चमीपर्यन्तं श्राद्धकालत्वाच्च। तथाच यमः। हंसे वर्षासुकन्यस्थे शाकेनापि गृहेवसन्। पञ्चम्योरन्तरेदद्या दुभयोरपिमक्षयोः॥ एकादशी चतुर्दश्यादि तिथिश्राद्धानि चयाहश्राद्धानितूत्तरत्रप्रपञ्चयिष्यन्ते। बृहत्स्वपरपक्षादि प्रपञ्चेनालम्। एवंपक्षश्राद्धमुक्त्वा पक्षान्तरमाह॥

## * ऊर्ध्वं वा चतुर्थ्याः॥ २॥

वाशब्दउत्तरोत्तरपाशस्त्यं सूचयन्स्मृत्यन्तरोक्तपक्षा न्द्योतयति। ततश्च शक्ततमेन शक्ततरेणशक्तेनचपूर्णिमांपञ्चमीमष्टमी मेकादशीमारभ्य शेषदिनेषु यथाक्रमं शक्त्याश्राद्धं कर्तव्यमित्यर्थः। तथाच ब्राह्मे। अश्वयुक्कृष्णपक्षेतु श्राद्धंकुर्याद्दिने दिने॥ लि-

भागहीनम्पक्षवा त्रिभागं त्वर्धमेववा विष्णुधर्मोत्तरेपि। उत्तराद-यनाच्छ्राद्धे श्रेयंस्यादचिनायनम । चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवेधिकम् । प्रौष्ठपद्यापरपक्ष सचादिधनिशेषतः । तन्वेवंपञ्च सूर्ध्वं ततोप्यतीत्याष्टमूर्ध्वं ततोप्यतीत्यैकादशीमारभ्य श्राद्ध-*विद्धता वाक्येन । कृष्णपक्षे दशम्यादि वर्जयित्वा चतुर्दशीमि-*ति । दशमीप्रभृतिश्राद्धविधायक मनुवाक्यम् विरुध्येत । पितुः प्रसन्नत्वे दशमीप्रभृतित्रिभागस्त्वं पक्षस्येतरस्यैकादशीप्रभृतीत्य-विरोधः । अतएव प्रतिपत्प्रभृतिष्वेकांवर्जयित्वा चतुर्दशीमिति चतुर्दश्यांपार्वणनिषेधस्य त्रिभागादिपक्षेष्वेवपर्यवसानमित्यु-क्तम् । तिथिविषये पक्षान्तरमाह ।

## * यदहःसम्पद्येत तदहर्ब्राह्म णानामन्त्र्यपूर्वेद्युर्वा ॥ ३ ॥

यदहरिति विभक्त्यर्थेऽव्ययीभावे । नपुंसकादन्यतरस्यामितिटज्भाव. । अविद्यादिप्रतिषेधार्थम् ब्राह्मणानिति। पूर्वेद्युरिति नि-पातः । ततश्च यद्दिने मृताहसंज्ञकतिथिरपरपक्षे साप्तस्ते पू-र्वाह्णे वा ब्राह्मणानामन्त्र्य श्राद्धं कुर्यादितिशेषः । पूर्वेद्युरसम्भवे तद्दर्शिनमन्त्रयेदितिवाशब्दार्थ । तथाचकूर्मे श्वोभविष्यतिमेश्राद्धम्पू *र्वेद्युरभिभुजयेत् । असम्भवे परद्युर्वा यथोक्त लक्षणैर्युतान् ।* देवलोपि । श्व.कर्त्तास्मीति निश्चित्य दाताविप्रान्निमन्त्रयेत् । पक्षमावेपरेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेदिति । अथवा वाशब्दो वाक्यार्था । योपित्प्रसक्तिनः पूर्वेद्युरितरांस्तदह इत्यर्थः । तथाच मार्कण्डेयः । निमन्त्रयेतपूर्वेद्युः पूर्वोक्तांस्तुद्विजोत्तमान् ।

ष्यप्राप्तौ तद्दिने वापि छित्वायोपित्प्रसङ्गिनं। कात्यायनोपि। नविना ब्रह्मचर्येण ब्राह्मणः श्राद्धमर्हति। ब्रह्मचारी यतिश्चैव तद्दिनेच निमन्त्रयेदिति। दिनद्वयेपि निमन्त्रयेदिति समुच्चयार्थोवा। तथाचवृद्धयाज्ञवल्क्यः। चरणक्षालनादूर्ध्वं पुनर्विप्रनिमन्त्रणम्। आसनार्चनसंयुक्तम् सर्वस्व प्रतिपादयेत इति। अन्येत्वाहुः। यदहः सम्पद्यतेति सम्पत्त्यर्थवाचकत्वाद्यदह र्यश्रोत्रियादिद्रव्यादि सामग्र्यदह एवश्राद्धं नतुमृताहमिति। तन्न। तत्सम्भायोगत्वेनानिश्चयत्वात् मृताह्नोपाचनिकत्वात् सदाचरितत्वाच्च। नच संयतः पुरुषयत्नसाध्यत्वादन्यपरत्वम्वा। तस्मान्मृताह एवसर्वं सम्पाद्य श्राद्धं कर्तव्यमित्युक्तं। अतएवगोभिलसूत्रे यदहस्तत्पद्यतेतीत्युपपन्नार्थमुक्तं। तथाच पुराणसमुच्चये। यातिथिर्यस्य मासस्य मृताहेतु प्रवर्तते। सातिथिः प्रेतपक्षस्य पूजनीयाप्रयत्नतः। तिथिच्छेदेनकर्तव्यो विनाशौचं यदृच्छया। पिण्डश्राद्धञ्च दातव्यं विच्छित्तिश्चैवकारयेदिति मृताहविषयस्यापि श्राद्धस्य वचनस्यापि सदाचारेण सङ्गतत्वात्तिथिविषयत्वमप्यविरुद्धं। एतच्च पुत्रभ्रातृपत्न्यादिव्यतिरिक्तविषयं। तेषा मेकादशी द्वादश्योः श्राद्धविधानात्। तथाच वायुपुराणे संन्यासिनोप्याब्दिकादि पुत्रः कुर्याद्यथातिथिः। महालयेतु यच्छ्राद्धं द्वादश्यां पार्वणेनत्विति। पिण्डश्राद्धं च दातव्यमिति निषिद्धदिनेपीत्यर्थं. तथाचकात्यायनः। अमाक्तः पक्षमध्ये तु करोत्येकदिनेयदि। निषिद्धेपि दिने कुर्यात् पिण्डदानं यथाविधिरिति। नन्वेवं पौर्णमास्यां मृतस्य कुलतिथाविति। तत्रामावास्यायामित्यर्थं किं। तन्न। तिथ्याश्रयाभावात्॥ दर्शमृतस्यैव तत्रोचितत्वाच्च। अतोभाद्रपद्यामेवयुक्तं तथाच वृद्धया-

ज्ञवल्क्यः। पूर्णिमायाममायांवा मद्याकन्यागतेरवौ। एकोद्दिष्टं तु मातुःस्या त्पितुःपार्वणमुच्यते। नान्यकाले प्रशंसंति चयेहनितु पार्वणमिति पूर्णिमादर्शयोर्मृतस्य कन्यागतेरवौ तयो। चयाहसंज्ञकतिथित्वात् प्रौष्ठपद्यामपरपक्षेच दर्शेच पार्वणंकर्त्तव्यमित्यर्थः। तथाच प्रौष्ठपद्याममायांच कन्याप्राप्ते रवौसदा। सर्वस्वेनापि कर्त्तव्यं श्राद्धं वा इन्दुलोचनइति। एकोद्दिष्टन्तु मातुःस्यादित्येव मुपरिष्टाद्वक्ष्यामइत्युक्तम्। अत्रकेचिद्दैवपूर्वं निमंत्रयेदिति। तन्न। पितृपूर्वस्यविहितत्वात्। (१) तथाच देवलः। श्वःकर्त्तास्मीत्ति निश्चित्य दातानिमान्निमंत्रयेत्। कृतापसव्यं पूर्वेद्युः पितृपूर्वंनिमंत्रयेत्। प्रचेताअपि। कृतापसव्यः पूर्वेद्युः पितृपूर्वंनिमंत्रयेदिति स्मृत्यन्तरेपि प्रार्थयीतप्रदोषांते भुक्तानशयितान्द्विजान्। अयुग्मानपसव्येन पितृपूर्वंनिमंत्रयेदिति यत्तु बृहस्पतिवचनं। उपवीतीततोभूत्वा देवतार्थं द्विजोत्तमान्। अपसव्येनपित्र्ये च स्वयंशिष्योथवासुत इति। तत्पूर्वं पश्चाद्वावयोरश्रवणादस्मिन्नेव क्रमेयोज्यमित्यविरोधः। एतञ्च पूर्वेद्युर्निमंत्रणं गृहलेपाद्युपलक्षणं। तथाच वाराहे। वस्त्रशौचादि कर्त्तव्यं श्वःकर्त्तास्मीतिजानता। स्थानोपलेपनंभूमेः कृत्वाविप्रान्निमंत्रयेदित्यादि। एवं निमंत्र्य ब्राह्मणानाह॥

## * स्नातकान्॥ ४॥

स्नातकास्त्रिविधास्तान्निमंत्रये दितिशेषः। तथाचयमः। विद्याव्रतोभयस्नातो ब्राह्मणःपंक्तिपावनइति। अयचापत्नीकनिमंत्रणप्रतिषेधप्रसंगः विभार्योद्विजस्त्रीयतिरित्यभिधानिषेधात्।

## * एकेयतीन्॥ ५॥

निमंत्रयेयुः नकात्यायनादयइतिविकल्पः॥ तथाच वायवीये।

(१) वस्तुतस्तु पितृपूर्वनिमन्त्रणन्त्वन्यशाखाविषयम् दैवपूर्वं ठ० श्राद्धमिति वक्ष्यमाणत्वात्॥

गृहस्थानांसहस्रेण दानप्रस्थशतेनच। ब्रह्मचारीसहस्रेण एकोयोगीविशिष्यते। विष्णुरपि। अपिनःस्वकुलेजायाद्योनयेदाहतुयोगिनः। विप्राञ्छ्राद्धे प्रयत्नेन तेनतृप्यामहेवयमिति। इतरेकात्यायनादयोनेतराङ्गः। तथाच गृह्यसंग्रहः॥ आचार्यानुमतंवाक्यमेकीयंदृश्यतेक्वचित्। शेषाण्येकीयवाक्यानि आचार्योनप्रशंसति। वसिष्ठोपि। श्रुतिस्मृतीअतिक्रम्य यंसमश्नातिमूढधीः। नतंद्र। ब्राह्मणंप्राज्ञः श्राद्धार्थमुपवेशयेत्॥ योदद्यादन्नमस्माकं तत्सर्वंमधुनासह॥ आमिषेणसमायुक्तं शस्तानांमृगपक्षिणां। जातूकर्ण्यः। दारवान्योद्विजःश्राद्धे दद्यान्नोमांसमध्वरे सदुरात्मा दुराचार्यो वेदमार्गप्रदूषकः। सर्पंगं लिखशीनंच च्छाद्यंयच्चनिरामिषं। विनादर्भैर्यथामंथ्या वयंगगविपाणवत्। यत्र मातुलजोदाशी यत्रवाहपत्नीपतिः। श्राद्धंविनोतितत्रैता व्रतं यच्चनिरामिषं। विश्वामित्रः। निमंत्रितस्तुयःश्राद्धे यज्ञेवापिद्विजाधमः। मांसंनाश्नातिनिरयं यातिरेपशुतांनरः। इत्यादिगवाधया यतिपक्षः कात्यायनेन निरस्तइत्येकेइत्युक्तम्। चिह्नलिङ्गनामेवविहितत्वात्। तथाचवायौ। सन्तिवेदविरोधेन केचिद्विज्ञानमानिनः। श्रयञ्जयतयोनाम वेदसंतिययारजः। मुण्डान् जटिलकषायान् श्राद्धेयत्नेनवर्जयेत्। ब्रह्मांडेपि। पभिर्निर्धूतदृष्टश्च श्राद्धंगच्छतिदानवान्। शिखिभ्योधातुरक्तेभ्य स्त्रिदंडिभ्यः प्रदापयेदिति। मुण्डोविशिखः। जटिलोभस्मांगः। श्रुतिरपि। अशुचिर्वा एषयन्मुण्डस्तस्तद्विधानंयच्छिखेति। उभावप्यज्ञातकुलशीलत्वान्ननिमंत्रयेदित्यन्ये। तथाचकात्यायनः। यस्यशीलंनजानीयात् स्थानंविपुरुषंकुलम्॥ कन्यादानेतथाश्राद्धे नहणीयात्कदाचन। मनुः। नस्वगोत्रेहविर्दद्या त्समानप्रवरे-

तथा। नाविज्ञातकुलेचैव यथाकन्यातथाद्दविः। पुराणसमुच्चयेपि।
येषांनज्ञायतेस्थानं नष्टस्थानाश्रयेद्विजाः। नज्ञातिर्ज्ञायतेयेषां
नसंबंधीनबांधवः॥ कुधर्माचरणायेतु नतांश्राद्धे निवेशयेदिति।
तदपिन। विज्ञातकुलशीलादीनां विधानोपपत्ते र्मांस मधु
दक्षिणाद्दानपंक्तिभेदादिदोषोपपत्तेः। तस्मादुभयोरप्यातिथि-
रूपेणभोज्यत्वं नपंक्तौनिवेशइतियुक्तं। तथाचवाराहे। वैश्वदेवेनि
युञ्जीत ब्रह्मचारिंशुचिंसदा। भिक्षुकान्देवतार्थेषु पूजयेदतिथिं
यथा। अतिथ्यादिव्रतौ छागलेयोपि। गंधमाल्यैः फलैश्चैव
भोजनैःक्षीरसंस्कृतैः। पूजयेदतिथिंश्राद्धे पितॄणांतुष्टिकारकं।
ब्रह्मचारीयतिश्चैव पूजनीयोहिनित्यशः। तत्कृतंसुकृतंयत्स्या स-
स्यषड्भागमाप्नुयात्। मार्कंडेयोपि। भिक्षार्थमागतांश्चापि।
कालेसंयमिनोयतीन्। भोजयेत्प्रणिपातादैः प्रसादोद्यतमानसः।
कल्पतरावपि। पूजयेच्छ्राद्धकालेपि यतिंसब्रह्मचारिणं। गच्छं
तिपितरोदेवाः मचयातिपरांगतिम्। तारयंतिचदातारं पुत्रान्दा
रानपितृंस्तथा। तस्मात्सर्वप्रयत्नेन पूजयेदाश्रमागतं। अला
भेध्यानभिक्षूणांपूजयेत् ब्रह्मचारिणं॥ तदलाभेप्युदासीनं गृ
हस्थमपिभोजयेत्। विश्वामित्रोपि। यतिर्वाब्रह्मचारीवा भुञ्जा
तानांद्विजन्मनां। श्राद्धे यत्रभवेत्साक्षी मद्दालयसमंहितत्।
महालयेगयायांच यतिधर्मंत्वविः। पित्रर्थंकल्पितंपूर्वं मन्त्रदेवा
दिकारणात्। वर्जयेत्तादृशीभिक्षां परबाधाकरीं तथा। यमो
पि। भिक्षुकोब्रह्मचारीवा भोजनार्थमुपस्थितः। उपविष्टेषुप्राप्तः
कामतमपिभोजयेदित्य वमादिवचनपर्यालोचनया यतीनांमाक्षि
त्वयोरेवप्राप्तिर्नपङ्क्तौनिवेशइति। तथाचस्मृतिः। भुक्तशेषं नभुं
जीत पीतशेषं नसंपिबेत्। नचैवोपविशेत्पङ्क्तौ यतिर्वातापसस्य

वेति । यतिस्तुसर्वविप्राणां सर्वेषामग्रभुग्भवेदिति । वायुपुराणोक्तेः । किञ्च यदिपंक्त्युपवेशःस्यात्तदाद्विजेभ्योमांसादिदाने न तेषांतदभावे पङ्क्तिवैषम्यान्नयुक्तम् । नपङ्क्तौविषमंदद्यादिति वाक्यात् । वृद्धहारीतोपि । पंक्तिभेदी वृथापाकी नरकंप्रतिपद्यते । कामांल्लोभाद्भयाद्वापि यःपङ्क्तिन्दूषयेद्द्विजः । नरकादवतीर्णस्तु जायते ग्रामसूकरइति । अपिच । दक्षिणायामपिवैषम्यं । तथाचविश्वामित्रः । हेमंवारजतंवापि यतयेब्रह्मचारिणे । योददातिकृतेवस्तं सभवेद्ब्रह्मघातकइति । अतएकइत्युक्तं तत्सूत्रम् यदेकग्रहणं व्यवस्थितविकल्पार्थं दैवश्राद्धे यतयः पित्रे गृहस्थाइति । तथाचवृद्धवशिष्ठः । चत्वारः आश्रमापूज्या दैवश्राद्धेनसर्वदा ॥ चतुराश्रमवाह्येभ्यः श्राद्धं नैवप्रदापयेत् । मार्कण्डेयोपि । ब्राह्मणानांसहस्रेभ्यो योगित्वग्रासनोयदि ॥ यजमानञ्चभोक्तॄंश्च नौरिवांभसितारयेत् । यमोपि । न ब्राह्मणम्परीक्षेत दैवेकर्मणिसर्वदा । पित्र्ये कर्मणिसंप्राप्ते परीक्षेतप्रयत्नतः । वैश्वदेवे नियुञ्जीतेति वाराहवाक्याच्चेत्यलंबहुना ।

## * गृहस्थान्साधून्वा ॥ ६ ॥

वाशब्दः प्राप्तिक यतिनिमंत्रणनिषेधार्थः । तथाचजावालः । अन्नंतियेनमांसानि भार्याहीनाश्चयेद्विजाः ॥ येचमातुलसंबंधानतान्श्राद्धे निवेशयेत् । ऋष्यशृङ्गोपि । नाश्नातियोद्विजोमांसं यस्नोदार संग्रहः तावेतौमुनिभिः प्रोक्तौ वनर्हौमखदूषकाविति । ननु । वाशब्दःगृहस्थनिषेधार्थःकिंनस्यात् । मैवं साधुशब्देनैवतन्निषेधसिद्धेः । नचात्रवाशब्दाभाव.शङ्काः । शाखांतरेदृश्यमानत्वात् ॥ तथाचगोभिलः । गृहस्थान्साधून्वेति । वसिष्ठोपि । य-

तीन्गृहस्थान्साधून्वेति । अतश्चगृहं पत्नी तत्सहितागृहस्थान्नरान्निमन्त्रयेदित्यर्थः । नचविभार्यंनिमन्त्रणमनुज्ञातं ॥ विभार्योवृषलीपतिरित्यविश्वाप्रतिषेधात् । साधूनाह्वादित्रपुराणे । साधून्वच्यामिसंयतमित्युपक्रम्यगङ्गायमुनयोर्मध्यो मध्यदेशः प्रकीर्त्तितः । तत्रोत्पन्नाद्विजायेवैसाधवस्तेप्रशस्तस्तइति । यद्वादेशव्यतिरिक्तदेशस्थाः सङ्कृताः म्लेच्छदेशनिवासिनो वर्जयेदितिमात्स्योक्तेः ।

## * श्रोत्रियान् ॥ ७ ॥

निमन्त्रयेदितिशेषः । श्रोत्रियमाहदेवलः । एकांशाखांसकलां षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतोविप्रः श्रोत्रियोनामधर्मवित् । जन्मनाब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते । विद्यया यातिविप्रत्वन्त्रिभिः श्रोत्रियउच्यतइतिवा ।

## * वृद्धाननवद्यान् ॥ ८ ॥

विकलेन्द्रियदुराचारादि दोषराहित्यमनवद्यशब्देनोच्यते । ततश्चायः सर्वेषुवेदेषुश्रोत्रियो ब्रह्मविद्युवेति युवत्वेन दृष्टनिषेधेवृद्धानिति प्रतिप्रसवः । यद्वायुवत्वविधिश्वान्तद्व्यतिरिक्तस्याल्पवयस्कस्य भोक्तृनियमात्तमस्यनिषेधः । अनवद्यपदमुत्तरत्रानुषज्यस्वकर्मस्थद्विजविशेषणं कृत्वा केवलवृद्धशब्देनज्ञानवयस्तपोवृद्धांस्त्रिविधानितिहलायुधः ।

## * स्वकर्मस्थान् ॥ ९ ॥

स्वजात्युक्तकर्मानुष्ठानरतान्विप्रानित्यर्थः । अतश्वश्रोत्रियाद्विलक्षणमनेनोक्तमित्यपुनरुक्तिः । तथाचपुराणसमुच्चये । गृहस्थाः कुलसम्पन्नाः प्रख्याताकुलगोत्रतः । स्वाचारनिरताः शान्ताः

विज्ञेयाः पङ्क्तिपावनाइति । मुख्यकल्पंप्रदर्श्यानुकल्पमाह ।

## * अभावेपिशिष्यान्स्वाचारान् ॥ १०॥

अपिशब्दः कमल्यंतरोक्तानुकल्पसमुच्चयेनतत्पूर्वोक्तमुख्यकल्पाभावेसद्वृत्तान् शिष्यादीनपिनिमन्त्रयेदित्यर्थः । तथाचयाज्ञवल्क्यः ॥ स्वस्रीयऋत्विक्जामातृयाज्यश्वशुरमातुलाः । त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाइति । अनुकल्पस्त्वयंज्ञेयः सदासद्भिरनुष्ठितः । मातामहम्मातुलञ्च स्वस्रीयंश्वशुरंगुरुं । दौहित्रंविट्पतिंबन्धुंऋत्विग्याज्यौचभोजयेदिति- मनुः । आपस्तंबोपि । गुणवत्लाभेसोदर्योप्यमात्यन्तेवासिनोव्याताइति । अयमनुकल्पोदैवएवनपित्र्ये । तथाचात्रिः । पितापितामहोभ्राताशिष्योवाथसपिंडकाः । नपरस्परमर्घ्याः स्युर्नश्राद्धेऋत्विजस्तथा ॥ ऋत्विक्पुत्रादयोह्येतेसकुल्याब्राह्मणाद्विजाः । वैश्वदेवेनियोक्तव्यायदेतेगुणवत्तराइति । अपिभिन्नक्रमइतिवृत्तायुधः । स्वाचाराः नित्यनैनाचार्यब्रह्मचारित्वाभावउक्तः । तेहिकदाचिद्ब्रह्मचारिणोविहिताःदद्यात्पिंडंहरेदन्नमित्यादिना । अतस्तथात्वेपिप्यदौहित्रादयोनाभिमन्त्रणीयाःपिंडदोंशहरइतिपिंडदातृत्वहरसम्भवात् । वर्ज्यानाह ।

## * द्विर्नग्नशुक्लविक्लिधःश्यावदन्तविद्धप्रजननव्याधितव्यंगिश्वित्रिकुष्ठिकुनखि वर्जम् ॥११॥

द्विरितिपित्रोर्वंशेत्रिपुरुषवेदाग्न्योर्विच्छेदेद्विर्नग्नः । तथाचसुमंतुः । यत्रत्रिपुरुषादासीदुभयोर्गोत्रयोरपि । वेदस्याग्नेश्वविच्छेदोद्विर्नग्नःपरिकीर्तितः । दुश्चर्मेतिच । शुक्लोतिकपिलांग-

केशः । तथाचकात्यायनः ॥ हीनांगः किलदुश्चर्मा शुक्लोऽतिकपि-
लःस्मृतः । विचर्चिकादिरुग्दोषोपि त्रिविधःपरिकीर्तितः मद्गृह-
कारोपि । खल्वाटकश्चदुर्वालः कपिलाश्चंडएवचेति । विक्लिध-
श्चोष्ठः । भग्नामनावृतदन्तः । तथाच । रसनैवाधरोष्ठाभ्यांछाद्य-
तेद्यनावली । विक्लिधःसतुविज्ञेयोब्राह्मणः पंक्तिदूषकः पूति-
गन्धघ्राणइतिकश्चित् । श्यावदन्तः । स्वभावात्कपिलदन्तः ।
विद्धप्रजननः छिन्नलिंगचर्मादिचिह्नात्येप्रसिद्ध. । तथाच कल्पल-
तायां । विद्धप्रजननश्चैव क्षतांगस्त्वविकारवान् । तंहि कामार्थ-
भोगार्थं दक्षिणाद्याःप्रकुर्वते । वन्ध्यस्त्रीजीवा । मृतापत्यइत्यन्ये ।
व्याधितोरोगी महारोगोपसृष्ट इतिकश्चित् । व्यङ्गो विगतस्त्रि-
विधवांगैयसेऽतिसमस्य । हीनांगोधिकांगश्च । हीनातिरिक्तां-
गइतिस्मृतेः । श्वित्री । श्वेतकुष्टी । कुष्टीकुत्सितगलितांगः ।
व्याधितग्रहणादेवतन्निषेधेसिद्धे तद्ग्रहणंदोषाधिक्य द्योतनार्थं ।
अजीर्णादिस्वल्परोगिदोषाल्पत्वज्ञापनार्थञ्च । कुनखी स्वभावात्कु-
त्सितनखो । एतान्वर्जयित्वा निमंत्रयेदित्यर्थः । यत्स्नातकादि
विहितगृहणादेवतन्निषेधेसिद्धे हीनांगादिनिषेधो मुन्यन्तरोक्त
आंतरालिकाहीनोपवेशनार्थः । तेचग्रंथगौरवान्नेहलिखिताः ।
अन्यथाहीनांगादि वर्जनमनर्थकंस्यात् ।

## * अनिन्द्योनामंत्रितोनापक्रामेत् ॥१२॥

अनिन्द्योनिर्दोषस्तेनामन्त्रितोनव्यतिक्रमेत् । तथाचश्रुतिः । (१)
सहोवाचानिंद्यावेमा इवनपसोनिन्द्यौ इत्तानशकमपक्रमितुमिति
तस्मादुहानिंद्याश्च इतोनापक्रामेदिति । आग्निवेश्योपि । नैकदापि
परान्नं यो भुङ्क्ते मूढमतिर्द्विजः ॥ वत्सराभ्यन्तरे वत्सरंभवेदि-
ति । निर्दोषस्येतिशेषः ।

---

(१) अग्निष्टोमप्रकरणेऽध्वरकांडे

## *आमन्त्रितोवान्यदन्नम्प्रतिगृह्णीयात्॥१३॥

निमन्त्रितोविप्रोन्यदन्नं सिद्धमामम्वा परस्मान्नगृह्णीयादित्यर्थः॥ यद्वान्यस्यान्नमन्यदन्नम् अन्यस्य दगागमश्छान्दसः। वाशब्दो निमन्त्रिते दातृभोक्त्रोः परस्परत्यागनिषेधन्द्योतयति। तथाच यमः। आमन्त्रितश्चयोविप्रो भोक्तुमन्यत्त्रगच्छति। नरकाणांशतंगत्वा चाण्डालेष्वभिजायते। केतनंकारयित्वातु निवारयतिदुर्मतिः। ब्रह्महत्यामवाप्नोति शूद्रयोनौचजायते। आदित्यपुराणे चामन्त्रितश्चिरंनैव कुर्याद्विप्रःकदाचन॥ देवतानांपितॄणांच दातुरन्नस्यचैवहि चिरकारीभवेद्द्रोगी पच्यतेनरकाग्निनेति॥

## * स्नातांशुचीनाचांतान्॥ १४॥

ईदृगागुपवेश्य। श्राद्धंकुर्यीतेति वक्ष्यमाणेनसंबंधः। स्नानशौचाचमनानि स्मृतिप्राप्तान्येवाहुसार्थकत्वेनानुवदति। तेनस्नानशौचाच मनेष्वत्रविशिष्टविधिरित्यर्थः। तथाच देवलः। ततोनिवृत्तेमध्यान्हे कृतलोमनखान्द्विजान्। अभिगम्ययथापूर्वं प्रयच्छेद्दन्तधावनम्। तैलमुद्वर्त्तनंस्नानं स्नानीयंचपृथग्विधम्। पात्रे (१) उदुम्बरेदद्या द्वैश्वदेवसपूर्वकम्। ततः स्नात्वानिवृत्तेभ्यः प्रत्युत्थायकृतांजलिः। पाद्यमाचमनीयंच संप्रयच्छेद्यथाक्रममिति। अत्रामन्त्रितानांश्विग्ध स्नान दन्तधावन विधिर्नकर्तुः। तथाच। दन्तधावनतांबूलम् स्निग्धस्नानमभोजनम्। रत्यौषधंपरान्नानि श्राद्धकृत्सप्तवर्जयेदिति। अत्रकेचिदनिषिद्धविधिविषयन्तैलादिप्रेषणमिति। तन्न। श्राद्धीयेन्हि विशिष्टविधित्वात्। तथाच कात्यायनः। तैलमुद्वर्तनंदेयम् ब्राह्मणेभ्यः प्रयत्नतः। तैरभ्यङ्गःप्रकर्त्तव्यो वर्ज्यंकाञ्जनचिन्तयेत्। अभ्यङ्गो-

(१) ताम्रपात्रे

सुरेश्वरोऽपि । पुत्रजन्मनिसंक्रान्तौ श्राद्धे जन्मदिनेतथा नित्यस्नानेचकर्तव्यो तिथिदोषोनविद्यतइति । निषेधस्यमलापकर्षविषयत्वाच्च । एवंव्रणादिव्याधौ रक्तस्रावादौच सत्यशुद्धत्वाच्छुचौनितिशेषः । तथाचपुराणसमुच्चये । क्षत्वातुरुधिरस्रावान्नविद्वान् श्राद्धमाचरेत् । एकंहि क्षौणिवाविद्वान्दिनानिपरिवर्जयेत् । वमनेवाविरेकेवातद्दिनंपरिवर्जयेत् ॥ यथारजस्वलानारी अशुचिस्त्रिदिनम्भवेत् । रक्तस्रवेनयानूणां मशुचित्वंप्रजायतइति एवमाचमनेऽपि विशेषः । तथाच विष्णुपुराणे । उपस्पर्शस्तुकर्तव्यो मण्डलस्योत्तरेदिशि । कर्त्तव्यंब्राह्मिजैर्वापि विधिवद्वाग्यतैःसदा । मण्डलस्योत्तरेदेशे कुर्यादाचमनन्द्विजः । सोमपानफलम्प्राहुर्गर्गगालवगौतमाः । आपस्तंबोऽपि । कुर्युराचमनंविप्राउदीच्यांमण्डलाद्बहिः । अन्यदिक्षुयदाकुर्यान्निराशाः पितरोगताइति । तथा । विप्रपादोदकस्थानेकुर्यादाचमनन्द्विजः । रुधिरन्तद्भवेतोयन्निराशाः पितरोगताः । पादोदकोच्छिष्टवारिद्वयोर्यत्रसंगतिर्भवेत् । उच्छिष्टाः पितरोयान्तियाम्यन्तिच गयाशिरइति । मण्डलादिकरणङ्गोमूत्रेणाहस्मृतिः । गोमूत्रमंडलेकृत्वादक्षिणेचोत्तरेउभे । आतीयाहनिसंप्राप्तेरेणुभिर्नजलेनच । गृहकुड्यादिलेपेषुगोमूत्रं रेणुरुच्यत इति ॥

**मू० प्राङ्मुखानुपवेश्यदैवेयुग्मानयुग्मान्यथाशक्तिपित्र्यएकैकस्योदङ्मुखान् ॥ १५ ॥**

यथाशक्त्येकैकस्येति पदेउभयत्रसम्बध्यते । युग्माद्विचतुरादयः । अयुग्मास्त्रिपञ्चादयः । ततश्चैकैकस्यपित्रादेर्दैवश्राद्धे यथाशक्तियुग्मान्प्राङ्मुखान् । पित्र्येप्येकैकस्यपित्रादेरयुग्मान्यथाश-

त्युदङ्मुखान्विप्रान्वामकरेणासनंस्पृष्ट्वादक्षिणकरेणद्विजकरं धृत्वा ॐभूर्भुवःस्वः इदमासनमास्यतामित्युक्त्वोपवेश्यश्राद्धं कुर्यादितिशेषः। तथाचकात्यायनः। सव्येनैवासनं धृत्वादक्षिणेदक्षिणंकरं। ॐभूर्भुवः स्वरित्युक्त्वाआसनेपूपवेशयेदिति। एवञ्चप्रतिपुरुषं दैवश्राद्धंभवतीतिचगम्यते। यथाशक्तीत्यस्यानियतशाचकत्वात्। अयुग्मत्वंच नवभोर्वाशेद्यं। नवावरान्भोजयेदयुजोयथोत्साहंवेति। ब्रह्माण्डेपि सामर्थ्येपिनवभ्योऽधोम्भोजयीतमतिद्विजान्। नोर्ध्वं कर्त्तव्यमित्याहुः केचिद्दोषस्यदर्शनादिति। एवंवहुतरामाप्तौसंख्यामाह॥

## * द्वौवादैवेत्रीन्पित्र्ये ॥ १६ ॥

वाशब्दः प्रतिपुरुषंदैवश्राद्धंनिषेध्यदैवेद्वौपित्र्येत्रीनितिपित्रपक्षौ दैवेद्वावेवपित्र्येप्रतिपुरुषंत्रिकत्रिकभेदेनषट्। एवमुभयत्राप्येआदशैवेत्यर्थः।अतएवप्रतिपक्षौदैवश्राद्धंनप्रतिपुरुषमितिपूर्वसूत्रापवादः। तथाचवृद्धयाज्ञवल्क्यः। दश वा पंचवाविप्रापार्वणेषुविनियोजयेत्। द्वौदैवेप्रागुदक्पित्र्ये एकैकदशपंचवेति। । पक्षद्वयावधारणार्थोवाशब्दः। विस्तरनिषेधात्। तथाचसएवद्वौदैवेपितृकृत्ये त्रीन्पंचचैवंप्रकल्पयेदिति। मनुरपि सत्क्रियान्देशकालौचद्रव्यब्राह्मणसंपदः। पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरं। बृहस्पतिरपि। एकैकमथवाद्वौत्रीन्दैवेपित्र्येचभोजयेत्। सत्क्रियाकालपात्रादिर्नसंपद्येतविस्तरं। ब्राह्मेपि। यस्माद्ब्राह्मणबाहुल्याद्दोषोबहुतरोभवेत्। आह्वनाशोमौननाशः श्राद्धतन्त्रस्यविस्मृतिः। उच्छिष्टोच्छिष्टसंसर्गोनिन्दादातृषुभोक्तृषु। वितंडावापवादोवाजल्पन्त्येतेपृथग्विधा ॥ * ॥ * ॥

## मु० एकैकमुभयत्रवा ॥ १७ ॥

वाशब्दोऽभावे। तत्तद्देशकालधनाद्यभावे दैवे पित्र्ये चैकैकं ब्रा ह्मणद्वयमेवोपवेशयेदित्यर्थः। तथा च वृद्धयाज्ञवल्क्यः। एकं दैवे तथा- पित्र्ये धनविप्राद्यभावतः। योजयेत्श्राद्धदामेव पितृपक्षं न लोपयेदि- ति। नन्वेवं न त्र्येवैकं सर्वेषामिति निषेधोऽनुपपन्नः। मैवं। तस्य सं- भवविषयत्वात्। तथा च। ब्राह्मणाविप्रसंपन्नावेकैकत्रयस्त्रयः। एकोवैकस्यभोक्तव्यस्त्रयाणामेकएववेति। अत्र दैवे पित्र्ये चेत्यनुवृत्तौ उ भयत्रेति पदं व्यर्थं सर्वत्र विभागार्थं। समंस्यादश्रुतत्वादितिन्यायात् ॥

## मु० मातामहानांचैवम् ॥ १८ ॥

मातामहानामप्येवं सर्वं पद्याभवेयुरित्यर्थः। अतएव माता- महश्राद्धमपि पितृश्राद्धवन्नित्यमित्युक्तम्। मातामहादिभिर्मातुः सापिंड्यमेव मातामहश्राद्धनित्यमिति विज्ञानेश्वरः। अतएवातिदे- शान्न पृथक्कार्यमित्यन्ये। तदेतत्कर्कादिभिरनादृतमित्युपेक्षितं। तथा च स्कन्दपुराणे। मार्गं च कुरुते यस्तु केवलं पितृहेतुतः मातामह- ह्यं न कुरुते पितृहा चोपजायते। चकारेणवद्धाद्वदेवत्यं मातृमाता मह्योरतिदेशार्थः। वैश्वदेवे विशेषमाह ॥

## मु० तन्त्रंवावैश्वदेविकम् ॥ १९ ॥

विश्वेदेवाः संत्यत्रेति वैश्वदेविकं। आह तंत्रमुभयपक्षयोरेक देवं भवेदितिशेषः। अतएव निठनी साधारणं भवेत्तं तन्त्रमितिवच नात्। पक्षद्वयपक्षोऽन्यपक्षेषु विकल्प्यते। तत्रैकप्रयोगपूर्वं साधक- त्वं भिन्नप्रयोगापूर्वसाधकत्वं च वैश्वदेवश्राद्धस्य भवतीत्यर्थः। एत- त्कालेचमसं पूर्वाह्नित्याभिमन्त्रयेत्। तथा च कात्यायनः॥ कुशांश्चमंच

सूक्तेनकुर्यात्सोयाभिसंश्रवम्। अन्नानिप्रोक्षयेत्तेनदेवैरश्राद्धमाघ-रेदिति। कूष्मांडमन्त्रा (१) यद्देवादेवेत्यादयस्त्वयः॥

## * श्रद्धान्वितःश्राद्धंकुर्व्वीत ॥ २०॥

श्रद्धाधर्मकार्येषुसफलत्वनिश्चयः। तथाचमनुः। प्रत्ययोधर्मकार्येषु सद्भिःश्रद्धेत्युदाहृतेति। साचस्मृत्युक्तधर्मोपलक्षणं। अतस्तद्युक्तःश्राद्धंकुर्वीतेत्यर्थः।तथाचविधिहीनमनुष्ठानंमन्त्रहीनमदक्षिणमश्रद्धयाकृतं दत्तंतद्रक्षांसिभुञ्जते। तथा।विभक्तिभिस्तुयत्किंचिद्दीयतेपितृदैवते। तत्सर्वंसकलंश्राद्धंविपरीतंनिरर्थकमिति। अत्रश्रद्धास्ति अवतःश्राद्धमितिश्राद्धग्रहणेनैवतदन्वितत्त्वेलब्धे श्रद्धान्वितग्रहणंपितृकार्येषुस्मृत्युक्तधर्मादरज्ञापनार्थं। तथाचमनुः। देवकार्यादुद्द्विजातीनां पितृकार्यंविशिष्यतइति। अतःपितृकार्येस्मृत्युक्तधर्मादरेणप्रयोगकुशलःस्यादिति। एतदुक्तंभवति संबन्धनामगोत्ररूपाणांयथावत्प्रयोगेणपुत्रादिदत्तं हविः पितृणांतृप्तिकरंभवतीति। तथाच। नामगोत्रं स्वधर्मप्रापकं हव्यकव्ययोरिति। ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोग कुशलोनरइतिच। नामादिप्रयोगोधर्मप्रदीपे। आवाहनार्घसंकल्पे पिंडदानेतिलोदके। अक्षय्यासनयोः षाढेनामगोत्रं प्रकाशयेत्। अत्रचिंत्यते। संबन्धादिक्रमोस्तिनवेति। केचित्तु संबन्धादीनांत्रयः प्रायकत्त्वमेवनोच्चारक्रमइति। अन्येत्वनुक्तगोत्रात्पित्तरमुकशर्मन्निति क्रमइति। वसुरुद्रादीध्यानमेवनोच्चारवृत्त्यर्थे। तन्नाद्यः। स्मृत्युक्तक्रमवैयर्थ्यात्। नद्वितीयःगोत्रप्रयोगस्यादावविहितत्वात्। नतृतीयः। वस्वाद्युच्चारस्यैवोक्तत्वात्। तथाच। संबन्धमथप्रथमतुया न्नामगोत्रेततःपरम्। रूपन्ततोविजानीयात् देयधर्मःसनातनः। अन्यच्च।

(१) २० अध्याये।१४।१५।१६। मन्त्राः।

स्वनामसमुच्चार्य तस्यगोत्रमुदीरयेत् । ब्रह्मस्मृतिरपि । आस-
नेऽर्घ्यदानेच पिण्डदानेऽवनेजने । संबन्धनामगोत्राणि यथार्ह-
मनुकीर्तयेत् । वसुरुद्रादित्याश्च पित्रादित्रितयेक्रमात् । माता-
महादिमात्रादि त्रयेचस्मृतिमर्हतीति । तथा । वसुरुद्रादित्य-
रूपा श्राद्धार्थंतर्पयेत्पितॄन् । नामगोत्रे समुच्चार्य तिलैस्तीर्थेषु-
संयतइति । तीर्थंपितृतीर्थं । ततश्चास्मत्पितरमुकशर्मन्नमुकगोत्र-
वसुरूपेतिप्रयोगः । पाद्येतुविरोधोभासते । विधिनिषेधयोर्दर्शना-
त् । तथाच । पाद्ये नामगोत्रेप्रकाशयेदित्युक्तम् । तथा । आम-
नावाहनेपाद्ये अन्नदानेतिलोदके । अक्षय्येपिण्डदानेचनामगो-
त्रे प्रकीर्तयेदिति (१) । मनुस्तुनिषेधति । हविर्गण्डूषभस्मीतुगोत्र-
मुच्चरतेयदि । श्राद्धं सहवेदघ्नंपितृणांनोपतिष्ठतइति । अत्रव्य-
वस्था । स्वागतार्घ्यगोत्रादिनिषेधः । पादार्घ्ये तु विधिरित्यविरो-
धः । अस्तिचस्वागतार्घ्य विधिः पादार्घपूर्वभावी । तथाचवृद्धयाज्ञ-
वल्क्यः । दत्त्वार्घंक्षालयेत्पादावाचम्यक्षालयेत्पुनः । पूजयेत्तुनरा-
अन्यविप्रानभ्यन्तरेनयेत् । पुराणेऽप्युच्यतेऽपि । दत्त्वार्घंक्षालयेत्पादौ
विष्टरेपुनिवेशयेत् । पूर्वंप्रक्षालयेत्पादौपादार्घंस्ततोनयेत् । वि-
प्रपादोदकोद्धृताम् पितृतृप्तिर्भवन्तिसइति । तस्माद्विप्रानाहूय-
सव्येन तूष्णींस्वागतार्घं दत्वा पादौप्रक्षाल्याचम्यमण्डलेउपवेश्य
यथाविधिपुनःप्रक्षाल्याचम्य पादार्घंगोत्राद्युच्चार्यंदद्यादिति । ना-
मगोत्रादिर्वक्तया विभक्त्याकुत्रप्रकाश्यतेइत्यत्राह । सम्बन्धेचभवे-
त्षष्ठीचतुर्थीसंप्रदानतइति सामान्येनषष्ठीचतुर्थ्योःप्राप्तयोर्विशेष-
माहस्मृतिः । अक्षय्यासनयोःषष्ठीचतुर्थ्येवकल्पने आवाहनेद्वि-
तीयाच शेषाःसंबुद्धयःस्मृताइति । कल्पने संकल्पे । एतच्चान्नसं-

(१) सव्येपवीतीविप्रस्यात्त्रैविषाणाम्पादयोरपि। दक्ष्यास्तोऽप्यवेचैवसत्तुकामेतुमैथुने।

त्पपादन्यत्र। तथाचब्रह्माण्डपुराणे पितृभ्यस्ततोदद्यादन्नमाम- न्त्रणेनतु। अमुकामुकगोत्रैत तुभ्यमन्नं स्वधानमइति। शांखाय- नोपि। अन्नंचासावेतत्त इत्युद्दिश्यभोजयेदिति। पठंतिच। आसंवरणेप्रसिद्धाया मघ्यंदक्षिणाविधौ। संपूर्णपृच्छासनयोः प- ष्ठींकुर्यात्सदैवहीति। आसनेचतुर्थीविकल्पिता। तथा पृच्छाच- व्यासनेषष्ठी चतुर्थीचासनेमता। अर्घावनेजनंपिण्डसर्न्नप्रत्यवे- नेजनं। संबुध्यैतानिकुर्वीत शब्दशास्त्रविशारदः। व्यासोपि। च- तुर्थींचासनेनित्यं संकल्पेचविधीयते॥ प्रथमातर्पणेप्रोक्ता संबुद्धि- मपरेजगुरिति। देशभेदेनचतुर्थीव्यवस्थितेतिरत्नाकरकारः। य- त्तुसंग्रहकारकाः। चासव्यासनयोःषष्ठी द्वितीयावाहनेस्मृता। अ- न्नदानेचतुर्थीस्या च्छेपाःसंबुद्धयःस्मृता इत्यन्नदानेचतुर्थी विधा- यकान्तच्छेषदानविषयं। शेषाःसंकल्पव्यतिरिक्ता ऽर्घदानावने- जनादयः। संकल्पेचतुर्थ्याएवविधिः। तथाचधर्मप्रदीपे। गोत्रा- णामासनेषष्ठी गोत्रानावाहनेतथा। अर्घेगोत्रे पितुस्तद्वत्पिण्डदाने- यनेजने। अन्नसंकल्पनेगोत्र मक्षय्योप्येवच। त्यागेदानेच- गोत्रेभ्यो दैवेप्येतदुदाहृतमिति। त्यागेसंकल्पे। दाने। द- क्षिणायाः। एतदग्रे वक्ष्यामः। अन्यत्स्मृतिभ्योनुसन्धेयमतःप्र- क्षान्वितइत्युक्तम्।

## मू० श्राद्धेनापिनापरपक्षमतिक्रामेत् ॥२१॥

अन्नेनावश्यंश्राद्धमपरपक्षेकुर्यादित्यर्थः। तथाचपुराणसमुच्च- ये। नहिपिंडप्रदानेन श्राद्धं भवतिकेवलम्। पुष्पंपत्रं फलन्तोयं यच्चान्यदपिकिंचन। पितृनुद्दिश्यदातव्यं श्रद्धयापितत्परैः। तत्सर्वश्राद्धमित्युक्तं श्रद्धयाश्राद्धमुच्यतइति॥ ननु यच्छ्राद्धं सूत

कादौ कर्तव्यमनुष्ठानमिति । तत्रैवेति । प्रतिज्ञातत्वात् कर्तव्यमि त्यन्ये । व्यवस्थापयिष्यामीति । यदि नेति तदाऽऽरम्भान्नियमो दोषश्चा समाप्ताविरम्भस्य वैयर्थ्यमुपक्रमभंगः स्यात् ।यदिकुर्यात्तदाद्रव्याद्य-शुद्धौ द्विजभुक्त्यादिवैषम्याद्यैर्नैवारम्भ स्तेनैवसमाप्तिरितिन्यायवा धस्स्यात् । तस्मात्सूतकादिव्यतिरेकेण मयापक्षश्राद्धं कर्तव्य-मिति प्रतिज्ञातेन सूतकाद्यन्तेकर्तव्यम् । अथगृहसाधारणद्रव्येभ्यः पक्षश्राद्धपर्याप्तद्रव्यमुद्धृत्याज्ञाता नियमेनमयाकर्तव्यमेवेति प्रति-ज्ञातेन सूतकादिमध्येश्राद्धकर्तव्यमितियुक्तं । यथाहमारीचः । पाकेनिमन्त्रितेपुचवरणं यथागदरावे ज्ञातप्रतिज्ञेन सूतकम-ध्येऽपि कर्तव्यमेतन्मिताक्षरीति । तथाच पुराणसमुच्चये । पक्षश्राद्धे समारब्धे सूतकंनिपतेद्यदि । समाहूताश्चपितरः सूतकान्तेवि-सर्जयेत् । अथवाकेचनेच्छन्ति श्राद्धं तुमृतसूतके । जन्मसूतक-मासाद्य पश्चाच्छ्राद्धं समाचरेत् । यदिनैवनरःकुर्यात्सूतकान्तेस-मापनं । प्राग्दत्तानिमनुष्येण श्राद्धेष्वासुरत्वमयान्तीति । इदञ्चा-शौचान्ते तन्मध्येवा समापनं । पूर्वोक्तविषयकल्पनेन व्यवस्थेय-मित्यविरोधः । अवश्यकर्त्तव्यत्वे हेतुमाह ॥

## मू० मासिमासिवोऽशनमितिश्रुतेः॥२२॥

प्रजापतिः पितृणामाहृत्य योयुष्माकम्मासिमासमशनं दत्तमतोऽप-रपक्षेऽवश्यमेवकर्तव्यमित्यर्थः । तथाचश्रुतिः । अथैनम्पितरःप्राचीनावीतिनउपासीदन्निति अनेनश्रुत्युक्तहेतुनाऽपरपक्षेमावास्यायामवश्य-कर्त्तव्यत्वं युक्तं । तेनाग्निभिःकुर्यादपरपक्षातिक्रमोनेत्यर्थादुक्तं । त-दतिक्रमेचोभयातिक्रमात् प्रत्यवायस्मृतेः तथाचएतान्येवबहिः स न्तिपञ्चमंयोव्यतिक्रमेत् ।तस्मान्नातिक्रमे द्विद्वान्पक्षमं पैतृमेधिकं ।

एतानिपुत्रायु धनधान्यादिकानि । यस्ममयरंपश्यमैतृकं श्राद्धमन्तथा । नमियमित य:श्राद्धं प्रमीतपितृकोद्विज: । इन्दुक्षयेमासिमासि प्रायश्चित्तीयतेतुस: ॥ नियममाह ॥

मू॰ तदहःशुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादीस्यादध्वमैथुनश्रमस्वाध्यायान्वर्जयेत् ॥२३॥

तदहरितिपूर्ववद्द्ज्भावः । श्राद्धदिने।मुंसूक्तोक्तनियमसनुतिष्ठेदित्यर्थः । शुचि:बाह्याभ्यंतर वमन विरेचनाद्यादशुद्धिरहित: ।अथवाशुभ्रवास:शुचि: शुक्लवास:स्यादितानेन कषायादिनिषेधात् । तथाचहारीत:। शुचय:शुचिवासस:स्युरिति । शंखोपि । शुचि:शुक्लवासा दर्भहस्त:स्वागतमितिब्रूयात् । श्राद्धकृच्छुक्लवासास्यादितिच । पुराणसमुच्चयेपि।एकवासास्तुय:कुर्यात्पिण्डनिर्वपनम्नर: । कषायवस्त्रसम्बीत: तद्दैत्याःसिभुंजते । धर्मप्रदीपेपि । कषायंखण्डवस्त्रं च रक्तवस्त्रं तथैवच । एवंविधानिवस्त्राणि वर्जयेच्छ्राद्धकर्मणि । अप्रमत्त: स्मृत्युक्तकालादौ सावधान: । तथाच । कालहीनंक्रियाहीनं मन्त्रहीनंच यद्भवेत् । पात्रहीनंचयच्छ्राद्धं भागन्तंरचसांविदुरिति । स्वाध्याय: श्राद्धमंत्रजपाद्यतिरिक्त: पाठ: मैथुने पूर्वदिनेपि । शेषंस्पष्टं ।नैयंविधिनिषेधयत्तो श्रपितुद्विष्ठाव्म । अतोन्यदपिविधिनिषेधरूपं स्मृत्युक्तंग्राह्यं ॥ तथाचदातृभोक्तोर्नियमा: ॥ नचाश्रुपातयेज्जातुनशुष्कांगिरमीरयेत् । नचोद्वीक्षेतसुश्रान्नं नचकुर्वीतमत्सरं । नदीनोपिनवाक्तुद्दो नचैवान्यमनानर: । एकाग्रमाधायमन: श्राद्धं कुर्यात्सदाबुधस्त्यादि । केचचिन्त्यते । विषयापरस्त्यादीनां श्राद्धपाकेकर्तृत्व तिलकेकिमधिकार-

उतनेति। यत्तु केचन समाचारादधिकार इति। तन्न। स्मृतिविरुद्धाचारस्याप्रामाण्यात्। तथा च व्यासः। गृहिण्यैवैव सुस्नाता पाकं कुर्यात्प्रयत्नतः। निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत्। रजस्वला च पाखण्डीं पुंश्चलीं पतितां तथा। त्यजेच्छूद्रां तथा वंध्यां विधवां मन्यातथैव च रजस्वलां विहिना दूरे मलिनां सरजस्कां। यत्तु ब्रह्मपुराणे। व्यंगकर्णी चतुर्थाह स्नातामपि रजस्वलां। वर्जयेच्छ्राद्धपाकार्थं स्वमातृपितृवंशजामित्यन्यस्त्रीविधायकं। तत्पत्न्याभवाभवविषयं। अतएव पठंति। मातृस्वसावधूः कन्या स्नुषा गौत्रपरस्त्रियः। पितृपाकन्न कुर्वीत निराशाः पितरो गताः। तथा। श्राद्धस्य पाको विधवा परस्त्री नष्टा न मंतः पितरो न देवा इत्यादि। व्यंगकर्णी त्रुटितकर्णी। तिलके त्वापस्तंबः। ललाटे पुंड्रकं दृष्ट्वा स्कंधे मालां तथैव च। निराशाः पितरो यांति यामं दृष्ट्वा सुदारुणमिति। एवं च सकलशिष्टाचारविरोधमालोक्य पुंड्रकनिषेधस्य नतु तिलकविषयत्वमिति केचित्। तदन्येन चमंतैत्त्वमात् तिर्यक् पुंड्रं तथा दृष्ट्वा स्कंधे माखां तथैव च। निराशाः पितरो यांति दृष्ट्वा चष्टपलो पतिमितिवाक्यात्। अतो न तिर्यक् पुण्ड्रः। तदपि न। सामान्येन तिलकमात्र निषेधात्। तथा च पठंति। वामहस्तेषु येऽभ्यंगृह्येरं गवलिस्तथा। ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताइति। रंगवलिश्चतुष्कं। अन्यत्र च। ललाटे तिलकं दृष्ट्वा स्कंधं मालाङ्कितं तथा। कांस्यपात्रे हविर्दृष्ट्वा निराशाः पितरो गताः। सत्यव्रतोपि। वर्जयेत्तिलकं भाले श्राद्धकाले कदाचन। तिर्यग्वाप्यूर्ध्वपुण्ड्रं वा धारयन्श्राद्धकर्मणीति। एवञ्च श्राद्धे तिलकमात्र निषेधो युक्तः। प्रयोगे त्वाशीःप्रार्थनानन्तरं तिलकविधानात् तथा च हृदयाद्यक्षतः। यावितारश्च नः सन्तु मा च याचिष्म कंचनेत्यत्र तु तिलकं कुर्यान्नन्वे गानेन भक्तितः। नित्यानुष्ठानसंनिष्ठाः सर्वदायज्ञबुद्धयः। पितृमातृप-

रः सन्तः स्वल्पसत्कुलजा नरा इति । तथाचालोचितपरम्परानुष्ठानं ग्राह्यं । चतुर्विंशतिमतेऽपि । श्रुतिर्वेदविरोधेन परित्यक्ताऽन्यथा यथा भवेत् । तथैवलौकिकस्यार्थं श्रुतिवाक्यं परित्यजेत् । पठन्ति च । ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा । श्राद्धकर्ता न कर्तव्यं यावत्पिण्डान्न निर्वपेदिति । यत्र भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं त्रि- नाङ्कितमिति । सत्संध्यादिकर्मविषयतिलकपरमित्यविरोधः ॥

## * आवाहनादिवाग्यत औपस्पर्शनात् ॥२३॥

आउपस्पर्शनादितिच्छेदः ॥ ततश्चावाहनमारभ्यचुलुकदानपर्यन्तम न्त्रवर्जं श्राद्धकर्म मौनमाचरेदित्यर्थः । तल्लोपे तु वैष्णवमन्त्रजपो वि ष्णुस्मरणं वा प्रायश्चित्तम् ॥

## सू० आमन्त्रिताश्चैवम् ॥२४ ॥१॥

तेऽपि च भक्षणादिषु भुक्तविधिनिषेधानाचरेयुरित्यर्थः । तथा च यमः । हुंकारेणापि यो ब्रूयाद्धस्ताद्वापि गुणान्वदेत् । भूतले चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वापि तत् । मौढ्यपादो बहिः कच्छो बहिर्जानुकरोऽपि च । अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः । पीतावशिष्टं तोयादि पुनरुद्धृत्य यः पिबेत् । खादितार्धं पुनः खादेन्मोदकानि फलानि च । मुखेन वा धमेदन्नं निष्ठीवेद्भोजनेऽपि वा ॥ इत्थमश्नन् द्विजः श्राद्धे हत्वा गच्छत्यधोगतिम् । पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ॥ उच्छिष्टोच्छिष्टसंसर्गं वर्जयन्तः परस्परम् । न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन । पादयोर्न शिरो न्यस्तिन पदा भाजनं स्पृशेदित्यादि । एवमित्यतिदेशेन भोक्तॄणामपि कण्ठं वक्ष्यं वोच्चारे प्राप्ते तन्निषेधा दङ्गीकरणादिकुरुष्वेत्यादिप्रतिवचनमननुज्ञातम् ॥

इति श्री श्राद्धकाशिकायां प्रथमाकण्डिका समाप्ता ।

इदानीम्प्रयोगसुपक्रममाणः परिभाषते

## * दैवपूर्वंश्राद्धम् ॥ १ ॥

परिभाषेयमपवादव्यतिरिक्ते व्यवतिष्ठते ॥ श्राद्धमितिपित्र्यकर्म ॥ दैवपूर्वमितिपदार्थानुसमयोक्तिः ॥ ननुग्रन्थान्तरोक्त काण्डानुसमयो नर्थकः स्यादितिचेत् ॥ पदार्थानुसमयानुक्तिविषयत्वेन सार्थकत्वात् । भाष्यच । सकलोगुणकाण्डस्यैकैकस्यप्रयुज्यते । सहत्वा प्रापकोनैव प्रयोगवचनोभवेदिति । अतश्चातापवादवर्जं मुखादप्रक्षालनादिसर्वकर्मदैवपूर्वंभवतीत्यर्थः । तथा । दैवपूर्वंभवेच्छ्राद्धम्वर्जयित्वाविसर्जनम् । प्रश्नश्चदक्षिणाचैव भुक्तेचाचमनम्विना ॥ तथा हस्तोच्छिष्टापनयनमाह्वानञ्चविसर्जनम् । दक्षिणासौमनस्यञ्च विनान्यद्दैवपूर्वकम् । धर्मप्रदीपेपि । विसर्गश्चसुलुकश्चाग्नौ करणम्पङ्क्तिवारणम् । कराङ्गुलिर्पोधानमपित्र्यपूर्वाणिषट्स्मृदेति । देवलोपि । दवयत्क्रियतेकर्म पैतृकं ब्राह्मणाश्रतिः । तत्सर्वंतत्र कर्तव्यम्वैश्वदेवस्यपूर्वकमिति ।

## मू० पिण्डपितृयज्ञवदुपचारःपित्र्ये ॥२॥

पितरोदेवतास्येतिपित्र्यं ॥ वाय्वृतुपित्रुषसोयदिति (१) यत्प्रत्ययः । ततश्चपित्र्यकर्मपिंडयज्ञवत्कार्यमित्यर्थः ॥ अनेनापसव्यं दक्षिणाभिमुखवामजानुपातान्यतिदिष्टं ॥ अतोनीविबंधनादिपिंडोत्थापनांतं पिंडपितृयज्ञधर्मोभवति । अत्रसंदेहः । किंनीविबंधनंवामभागे दक्षिणेवेति । सतोभयथाचारदर्शनाद्यथामप्रदायंव्यवस्थेतिपारि

(१) रीङ् ऋतइतिरीङादेश यथ्यं तिघेतीकारलोपेरूपम् ।

जातः । तत्रविचार्यं । किंनीविर्द्वैवंकर्मपित्र्यं वेति ।आद्ये पिंडपितृयज्ञेऽनुष्ठानविरोधः । अंत्ये उपवीतिवदपसव्यांगउपनीतेति। तथाचमनुः । प्राचीनावीतिनासम्यगपसव्यमतंद्रिणा । पित्र्यमानिधनात्कार्यंविधिवद्दर्भपाणिनेति । अत्रप्राचीनावीतिनेत्यपसव्ये प्राप्ते ऽपसव्यग्रहणनीवीबंधन वासजानुपातादिप्राप्त्यर्थं । किंच सर्वंकर्मापसव्ये नदक्षिणादानवर्जमितिस्मृतिः । पिण्डपितृयज्ञवदित्यतिदेशोपि । यत्तुकात्यायनवाक्यं । नीवीकार्यादशागुप्तिर्नीमकुर्यात्कुशैः सदा।पितृकर्मणिचैवोक्ता वेदवेदांगवेदिभिरिति । तदाभ्युदयिकविषयं । पठंतिच । दशा संगोपनंनीवीसाधार्ये मानुषीस्मृता । पितॄणांदक्षिणे पार्श्वे विपरीताचदैविके । हृदयाख्यवल्क्योपि । दक्षिणे कटिदेशेतु तिलैः सहकुशत्रयं । तर्जयंतीहदैत्यानां यथान्नणांयमस्तथेति नन्वेवंनीवीकार्येतिवाक्ये सदाशब्दान्नैवंविषयइतिचेत् । नीवीबंधनस्यरक्षोघ्नत्वाद्दैवपित्र्यमानुषकर्मसुयथोचितं । दशागोपनस्यविहितत्वेन सदाशब्दस्यैव मर्थत्वात् । तथाचश्रुतिः । दक्षिणतद्ववहियन्नीविरितिलिंगं । लिङ्गादपिविधिर्ज्ञेयइतिवाक्यात् । नचश्रुतिविरुद्धास्मृतिःप्रमाणं श्रुतिस्मृतिविरोधेतुश्रुतिरेवबलीयसीतिवाक्यात् । तस्माद्दक्षिणाङ्गएवनीविबंधः । पिंडब्राह्मणभाष्येपि । अथनीविसुद्वृह्य नमस्करोतीति कंडिकाव्याख्याने नाभेर्दक्षिणतएवनीविस्थानमुक्तम्।तदभिमन्त्रःपराशरोक्तः । यथा । निहन्मिसर्वंयदमेध्यवद्भवेद्धताश्चसर्वेसुरदानवामया । यक्षाश्चरक्षांसिपिशाचगुह्यका हतामयायातुधानाश्चसर्वे ॥

## मू० द्विगुणास्तुदर्भाः ॥ २ ॥

सामयगु पलक्षणमिदम् । तथाचपुराणे । उपमूलसकृल्लूनकु-

मांसलोपकल्पयेत्। यत्रास्मिन्नास्तीर्णास्त्वयः शुद्धौसमाहृताः। पार्श्वं चततामपि पात्राणि सु: समिन्मन्तु। पुष्पधूपसुगन्धादि चौसमूलच्छिन्नमेव च मिति। हस्ती दासनापि एतदाहरणमाह। उदपात्र चक्रास्तच्छिन्नमेव च सुक्सुवादिकं आहरेदपसव्येनसर्वं दचि- णत:शनैरिति दर्भा:। समूलकुशा:। तथाचयम:। समूलास्तुभवेद्द- र्भा: पितॄणां श्राद्धकर्मणि मूलेनलोकान्जयति शक्रस्यतुमहात्म- न:। हारीतोपि। दक्षिणदिशात: समूलकुशानाहरेदिति। तुशब्दो- विशेषार्थ:। तेनपिण्डावस्तनकुशवर्ज स लाद्विगुणा: पित्र्ये। दैवस्ने तयाद्वयोस्तुफ्टजवोभवन्तीत्यर्थ: तथाचस्मृति: ॥ अथसकृदा- च्छिन्नान्युपमूल(१)च्छिन्नानिभवन्ति। स्मृतिरपि। उपमूलसकृ- च्छिन्ने र्बर्हि: पिण्डपुथ्यस्तते। कात्यायनोपि। सपिंडीकरणं यावद- जुदर्भै: पितृक्रिया ॥ सपिंडीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत्। देवानामृजवोदर्भा: पितॄणांद्विगुणा:स्मृताइति ॥

## सू० पवित्त्रपाणिर्दद्यादासीन:सर्वत्र ॥ ४ ॥

पवित्रमुपग्रहोपलक्षणं। सर्वत्र दैवेपित्र्ये च। तेनोभयत्रप- वित्रोपग्रहप्राणिरासीनश्चदद्यादित्यर्थ:। तथाचमनु:। पित्र्य- मानिधनात्कार्यं विधिवद्दर्भपाणिनेति। अथवापवित्रपाणित्वमा- सीनत्वञ्चस्मृतिप्राप्तमेवात्र सार्थकत्वेनानुवदति। तेनवामहस्तेकु- शादानत्वमावाहनेचासीनत्वं निषेधतीत्यर्थ:।तथाच पठन्ति। वा- महस्ते यदा दर्भा गृह्णे रक्षणलोस्तथा। ललाटेतिलकंदृष्ट्वा निराशा: पितरोगताइति। किञ्चावाहनेनागच्छत्सुपितृषु कर्तुरासीनत्वं नयुक्तं तथाचपिंडदानेपुराणोक्तलिङ्गं। अथप्राञ्जलिरुपस्थाय स्थि- त्वा चावाहयेत्पितॄनिति। मन्त्रवांस्तुगृह्येपि। आयन्तुन: पितर:

(१) मजद द्विशान। पञ्चशृ नकदो निवार्ड्ड। कुवच्छदितानि। उपमूलाद नानिभवंतिउपमूलमसोपिदिनानिछिदितानीत्यर्थ। दारुच्छेदनेऽयम्॥

सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैरिति। किञ्चासीनोदद्या-दिति दानेआसीनत्वं नपुनरावाहनादावप्यस्थाने मौतिसूत्रार्थः॥

## प्रश्नेषुपङ्क्तिमूर्द्धन्यंपृच्छतिसर्व्वान्वा॥ ५॥

पङ्क्तिमूर्द्धन्यः पित्र्ये प्रथमोविप्रः। लिङर्थेलट्। वाशब्दोव्यव-स्थितविकल्पस्तुल्य विकल्पस्याष्टदोषत्वात्। इच्छायामाशीः प्रार्थ-नादिषु सर्वेष्वपंक्तिमूर्द्धन्यइत्यर्थः। तथाचपुराणे। द्वौहस्तौयु-ग्मतः कृत्वाजानुभ्यामन्तरेस्थितौ। समग्रयज्ञोपवीतः सर्वान्पृच्छे-द्द्विजोत्तमानिति। तुल्यविकल्पोयमिति कर्कादयः। नचप्रश्नेषु प-ङ्क्तिमूर्द्धन्यं सर्वान्वैतावतिवाच्येपृच्छतीति गौरवंस्मृत्यन्तरोक्तमवि-ध्यर्थम्। प्रश्नेनैवतत्सिद्धेः। तथाचद्दक्षयाज्ञवल्क्यः। इच्छाद्यासनम-र्घपूरणमत धावाहनार्घ क्रमो न्युब्जंचार्चनभोजनाग्निहवनं शेषो-जपःकल्पनम्। दत्वान्नं जपतृप्तिपिंडयजने सुप्तोक्षितान्यके-आशीःपुंड्रकवाचनार्थं चअनन्दानंविसर्गस्तुतिरिति। आदिना दे-शकालगोत्रादिस्मरणविकिरादि पिंडार्चनान्तंगृहीतम्। अवा-न्योपिस्मृत्युक्तःक्रमः। तथाच। आहारम्भेगयांध्यात्वा ध्यात्वादे-वंचजनार्दनम्। अपितृन्मनसाध्यात्वाततःश्राद्धंसमारभेत्। अग्नि-ष्वात्ताःपितृगणाः प्राचीरक्षन्तु मेदिशम्। तथाबर्हिषदःपान्तु या-म्यांयेपितरस्थिताः। प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः। ऊर्ध्वंतस्त्वर्यमारक्षेत् कव्यवाडो नलोप्यधः। रक्षोभूतपिशाचेभ्य स्तथैवासुरदूषकः। सर्वतश्चाधिपस्तेषां यमोरक्षाङ्करोतुमे। गायत्रीं-यामन्ततःकुर्यात् गायत्र्याःस्मरणान्तथा। श्राद्धकर्तास्मीतिवदेद्द्वि-प्रैश्चापिअनुज्ञापय। देवताभ्य.पितृभ्यश्चेत्यादेरादिमध्यावसानेपुजपः आदिमध्यावसानेषु त्रिरावर्त्त जपेद्बुध इतिवाक्यात्। एवंपरिभाष्य कर्मोपक्रमते॥

## सू० आसनेषु दर्भानास्तीर्य ॥ ६ ॥

पादासनदीपोपलक्षणम् । तथाचकात्यायनः ।विष्टरार्थकुशान्दद्यात् द्विगुणान्पादशौचतः । आचम्यञ्च । पृथक्पृथक्वासनेषु तिलतैलेनदीपकाः । अविच्छिन्नार्चिषोदेया सेतुरक्षाहितोऽस्मैरिति । आसनान्याहस्मृतिः । शमीकार्ष्मर्यशल्लीय कदम्बोवारणास्तथा । पञ्चासनानिशस्तानि श्राद्धे देवार्चनेतथा ॥ श्रीपर्णीवारुणाक्षीरोजम्बूलामूत्रादम्बजम् । सप्तमत्राकुलंपीठं पितॄणांदत्तमक्षयमिति । ततश्च सदीपासनेषु पादासनंदत्वासनेषु दर्भान्दद्यादित्यर्थः । द्वितीयमेतदास्तरणमतोऽस्मात्पूर्वमपि दर्भानास्तीर्योपवेशयेदिति । तथादेवीपुराणे । कुशोत्तरेतिणास्तीर्य आसनेलोहवर्जिते । दाताचस्वासनेपूते विप्रानावेशयेत्सुधीरिति । नन्वास्तृतेषु पुनरास्तरणं कुतः । पूर्वास्तरणस्यधर्मसमवत्वादित्येके।विप्रानुत्थायोत्थाप्यकर्तव्यमित्यन्ये द्वितीये उपवेशितानामुत्थानानुपपत्तिः। तस्मात्पूर्वमास्तरणमाचमिह तद्दानमित्यपौनरुक्त्यं । अतश्चास्तीर्यदत्त्वेत्यर्थः । संकल्पत्वात् । तथाचमत्स्यपुराणे । स्नाताञ्शौचानाचम्य सूपविष्टान्यथाविधिः । दद्याद्दर्भासनंतेभ्यो वैश्वदेवत्वपूर्वकं चासनेष्विति । इत्येकुशान्नदद्यादितिसमस्यर्थः । दर्भाश्चैवासनेदद्या न्नतुपाणौकदाचनेत्युक्तेः । एतद्दैवेदक्षिणतः पित्र्येवामतः । पितृणामासनंदद्यात् वामपार्श्वेकुशान्सुधीः । दक्षिणे चैवदेवानामर्वंदद्याद्धकर्मणीतिवाक्यात् । अत्रैकआसनदाने स्वधाप्रयुंजति । स्वधाशब्दप्राप्तेः तन्न तस्यासनादौनिषेधात् । तथाच-हेमाद्रिधृतौ । पितृभ्योनिखिलंदद्यात् स्वधाकारेणधर्मवित् । अन्यत्रमासनंचैव वर्जयित्वार्धमेवच । धर्ममदीपेपि । आसनाद्या-

नयोरर्घे तथाद्यन्ते वमेजने । पाणेश्वाशास्वधावाणीं नकुर्यादन-
वीन्मनुः । तेमास्मित्पितुरमुकशर्मणोमुकसगोत्रस्य वसुरूपस्येदमा-
सनमस्त्विति प्रयोगः । केचित्सकारवर्जं गोत्रमुच्चरन्ति । तन्नतत्म-
हितस्यैवोक्तत्वात् । तथा । सकारेणहिवक्तव्यं गोत्रं सर्वत्रधीमता ।
सकारःकुतपोज्ञेय स्तस्मात्तत्नेनतद्वदेदिति ॥

## * विश्वान्देवानावाहयिष्यइतिपृच्छति॥७॥

स्पष्टं । यवानादायोंकृत्यनिरंगुष्टं द्विजस्तंघृत्वेदंकार्यं । तथाचय-
मः । यवहस्तस्ततोदेवा न्विज्ञाप्यावाहनंप्रति । शाकटायनोपि ।
आवाहनन्तुकर्त्तव्यं द्विजैर्वोंकारपूर्वकं । गोभिलोपि । यवाना-
दायोंकारंकृत्वेति । अंगुष्ठंगृहीत्वावाहयंत्येके । तन्न । निर-
ङ्गुष्ठंगृहीत्वातु विश्वान्देवान्समाह्वयेदितिब्रह्माण्डोक्तेः । ततः
सव्योदङ्मुखं दक्षिणस्त्वन्वाच्य सञ्जुकुशानादायोमित्युक्त्वा पु-
रूरवार्द्रवादिप्रयोगंकुर्यादित्यर्थः । नन्वर्घान्पूरयित्वा वाहये द्द-
त्वायात्त्रपूरयेदिति । उभयथावाक्यदृष्टेः । तथाहि । उमामहे-
श्वरसंवादे । कुशांस्तुनाभ्यर्च्यगृह्य दत्वासनमनुक्रमात् । निवेश्य-
तत्रविप्रान्वै कुर्यादर्घाभिपूरणम् । शंन्नोदेव्यापयःक्षिप्त्वा यवोसी-
तियवानपि । गंधपुष्पंचतूष्णींस्या त्पश्चाद्देवान्समाह्वयेदिति । पुरा-
णोच्चयेप्यर्घं सम्पूर्याावाहनमुक्तम् । याज्ञवल्क्यास्त्वावाह्य पूर-
यति । पार्श्वमञ्चालनन्दत्वा विष्टरार्थान्कुशानपि । आवाहये-
दनुज्ञातो विश्वेदेवासइत्यृचा ॥ यवैरन्ववकीर्याथ भाजनेसपवि-
त्रके । शन्नोदेव्यापयःक्षिप्त्वा यवोसीतियवांस्तथेति । यादिव्याइ-
तिमन्त्रेण हस्तेष्वर्घंविनिक्षिपेत् । अपसव्यं ततःकृत्वे त्यादिसूत्रका-
रोप्यावाह्यार्घं पूरयति । अत्रविरोधः स्मृतिपुराणयोः । स्मृतेःप्राब-

ल्या तसूत्रोक्तत्वाच्चा वास्तव्यपूरणमित्येके। नेत्यन्ये। स्मृतावेवार्घपूरणस्य पूर्वमुक्तत्वात्। तथा च क्रमपरा हि याज्ञवल्क्यस्मृतिः। पृष्ट्वा-द्यासनमर्घपूरणं मतश्चावाहनार्घक्रमइति। एवंसति दर्भानास्तीर्य विश्वान्देवानावाहयिष्यइतिसूत्रमता याज्ञवल्क्यवचनेनैकवाक्यता मुनिभाऽऽसनार्घदानांत याज्ञवल्क्योक्तकाण्डानुसमयस्याहता ऽन्यद-पदार्थानुसमयइतिज्ञापितम्। अन्यथा वाजसनेयि परत्वाद्याज्ञवल्क्यस्मृत्यासूत्रम्विरुध्येत। तथा चासनन्दत्वा हि याज्ञवल्क्यः। अर्घपात्रं समानीय कुशद्वयसमन्वितं। शन्नोदेव्यापयःक्षिप्त्वा यवोऽसीति यवान्क्षिपेत्। गन्धपुष्पादिसंपूज्य पृच्छांकुर्याद्विचक्षणः। पूर्णमसित्वतितैवक्त्रे विश्वेदेवान्समाह्वयेत्। ततस्तुक्रमयोगेन पित्र्यं नु निवेदयेत्। कुशाग्रतिलसंयुक्तं तिलोसीतितिलान्क्षिपेत्। शन्नोदेव्यापयःक्षिप्त्वा शेषपूर्ववदाचरेत्। स्वनामश्चैगोत्रैस्तु स्वधान्तमवतिवैततः। आवाहयेत्पितॄन् भक्त्याऽपेदायंतुनःपुनरिति। तत्रापासनन्दत्वार्घं संपूज्य संपूज्य पृच्छांकृत्वा शाद्धार्घं दद्येति वैश्वदेवकाण्डंकृत्वाऽऽसनादिपितृकाण्डंकुर्यादितिक्रमः। वैजवापायनोप्यर्घानंतरं पदार्थानुसमयमाह। तस्योपरिकुशान्दत्त्वा प्रदद्याद्दैवपूर्वकं। गन्धपुष्पाणि धूपं च दीपवस्त्रोपवीतकमिति। अन्यथा कथन्दैवपूर्वकमिति पदार्थानुसमयमुपक्रम्यविश्वान्देवानावाहयिष्यइत्यादिना तत्रैवपुराणस्यदिग्दर्शनंकृतम्। अथपदार्थानुसमयकाण्डानुसमयोर्विकल्प। विश्वेदेवानाह्वादित्यपुराणे। विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषुकीर्तितौ। नित्यन्नान्दीमुखश्राद्धे वसु सत्यौ च पैतृके। नयात्रालभने देवौ कालकामौसदैवहि। अपिकान्यागतेसूर्यं श्राद्धे च धुरिलोचनौ। पुरूरवार्द्रवौ चैव विश्वेदेवौ च पार्वणे। नवान्नप्राशने पैतृकैनवान्ननिर्दिश्याद्धे। क-

न्वागतीपूर्वं इति केवलदाभ्यवुध्याक्रियमाणे । उभयबुध्याह्नतेतु पुरूरवार्द्रवावेश । (१ गोदोहनेनमधुनामखे तिवन्दिल्यकर्माश्रयणे मधुयाकल्पविधेरितिपारिजात: ॥

* आवाहयेत्यनुज्ञातो विश्वेदेवासऽआगतेत्यनयावाह्यावकीर्य विश्वेदेवा:शृणुतेममितिजपित्वा ॥ ८ ॥

आवाहयेतिद्विजैराज्ञप्तो विश्वेदेवासऽआगतेत्यनयाऽवाह्यावकीर्य विश्वेदेवा: शृणुतेममित्य,चंजपेदित्यर्थ. । अवावकी र्येति यद्यपि द्रव्यमंत्रयोरनुपदेशस्तथापियवै रोषधय: समवदंतेतिमंत्रेण च प्रदक्षिणमुदङ्मुखेनावकिरणं द्रष्टव्यं । तथायम: । यवहस्तस्ततोदेवा न्विज्ञाप्यावाहनंप्रति । आवाहयेदनुज्ञातो विश्वेदेवासइत्यृचा । विश्वेदेवा: शृणुतेममितिजप्त्वा ततोयवान् । ओषधयइतिमंत्रेण,विकिरेत्सावप्रदक्षिणमिति । अवावाह्ययवान्विकिरन् ततोजपइतिक्रम: । उदङ्मुखस्तुदेवानां पित्र्यां दक्षिणामुख: । प्रदक्षिणं तुदेवानां पितृणामप्रदक्षिणमितिच । नन्वपहताइति तिलानवकीर्यैत्यवकिरणेऽपहतेतिमंत्रस्य विहित त्वात् कथमोषधइति । न ।वैश्वदेवस्य सतएवरक्षोघ्नत्वादपहता इत्यस्यवैयर्थ्यात् ॥ तथाच गोभिलसूत्रं । ओषधय: समवदंतेति । अथवा मंत्रानुपदेशा त्तूष्णीमेवावकिरणं । तथाचखादिरगृह्यं । तूष्णीं यवानवकीर्येति ॥

(१) श्राद्धविशेषेविश्वे देवानामन्नाभिहरन्याति.
उत्पत्तिमामचैवैतान्विदुर्द्विजातय स्यमुच्चारणीयस्तैर्मन्त्रश्चासमन्विते आगच्छन्तु महाभाग।विश्वेदेवामहावला: येयत्नविहिता. श्राद्धे सावधानाभवन्तु ते

***पितॄनावाहयिष्यइतिपृच्छत्यावाहयेत्य-नुज्ञातऽउशन्तस्त्वेत्यनयावाह्यावकीर्यायन्तु नइतिजपित्वा ॥**

पितॄनावाहयिष्य इतिपृष्ट्वा वाहयेति द्विजैरनुज्ञात उशन्तस्त्वे त्यनयर्चावाह्यापहतइति तिलानप्रदक्षिणमवकीर्यायन्तुनइत्यृ-चन्तिष्ठन्नवकीर्यजपित्वा । पितॄनिति मातामहोपलक्षकम् । तत-श्चापसव्येन दक्षिणामुखो द्विगुणकुशतिलानादाय वामजानुं पातयन्नोमित्युक्त्वाऽस्मत्पितृपितामहप्रपितामहानमुकशर्मामुक-सगोत्रान्वस्वादिरूपानावाहयिष्य इति पृष्ट्वावाहयेति द्विजैरनुज्ञात उशन्तस्त्वेत्यनयावाह्यापहता इति तिलानवकीर्यायन्तुनइत्यृच तिष्ठञ्जपेदित्यर्थः । नन्वत्रापितूष्णीमोषधयइतिमन्त्रेण चावकि किरणमिति । न । रक्षोघ्नत्वादवकिरणेऽपहतेत्यस्यैवयुक्तत्वात् । अतोदकस्पर्शः राक्षसत्वात् । अत्रैकेचिद्बहुत्वेप्रतिद्विजमेकवचन-प्रयोगेणपित्रादीनावाहयन्ति । तत्पितॄनावाहयिष्यइति सूत्रो-पदेशात्पितृन्हविषेअत्तवइति मन्त्रलिङ्गाच्चोपेक्ष्यं । ननुमातामह-श्राद्धे मन्त्रोहोऽस्तिनवेति ॥ अत्रकेचित्पितृभ्यः स्वधायिभ्यः अत्रपि-तरः आयन्तुनः पितरइत्यादि । एवंप्रदक्षिणात्कोदहीनान्दी-मुखान्पितॄन् । स्वपितृभ्यः पितादद्यात् अमस्येह पितृश्राद्धे इत्यादिश्रुतिस्मृतिवाक्येषुपितृशब्दस्यैवप्रयोगान्मातामहश्राद्धे पि पितृशब्दप्रयोगएवनमन्त्रोहइति । इदं विचार्यं । यदिश्रुत्यादिवा-क्यस्य पितृशब्द प्रयोगेणैव सिद्धिस्तर्ह्यस्मातरस्मन्मातामहेत्यादि प्रयोगेष्वपिपितृशब्दोक्तिरेवास्तु । अथमन्त्रेष्वन्यथात्वनिषेधो-नैतेषुप्रयोगेष्विति तर्हि मन्त्रोह प्रतिपादकव्याख्यानांवैयर्थ्यं स्यान्म-न्त्राणांवा यथाप्रयुक्तिरित्युभयथापि यथाविहितमन्त्रोहः सिद्ध-

इति। तथाच कात्यायनः। यथार्थमूहयोऽदिसे। नमस्कृतावपूर्वत्वा सृदिर्वचनादिति। विष्णु रपि। आवाहनेऽस्वधाकारे मन्त्राऽऽह्वा विसर्जने। अन्यकर्मण्यनूह्यास्युरेषश्राद्धविधिःस्मृतः मातामहा-नामप्येवं श्राद्धंकुर्याद्विचक्षणः। मन्त्रोहेनयथान्याय शेषाणां-मन्त्रवर्जित मिति। अपिचैकोद्दिष्टे मिदप्येवं। एकवन्मन्त्रानूहेनेको द्दिष्टइति शेषाणांमन्त्रवर्जित मिति। पितृमातृमातामहव्यति-रिक्त पितृव्यभ्रात्रादीनामूहो मन्त्र वर्जितमित्यर्थः॥

## मू० यज्ञियवृक्ष चमसेषु पवित्रान्तर्हितेष्वेकै कस्मिन्नप आसिञ्चति शन्नोदेवीरिति॥१०॥

यज्ञमर्हन्तियज्ञियाः पालाशादयः। यज्ञर्त्विंग्भ्यांघखञाविति प्रत्ययः। तथाच श्रुतिः। तेवैपालाशास्युरित्युपक्रम्य यदि पालाशान्नविन्दे दयोपिवैकङ्कतास्यु र्यदिवैकङ्कतान्नविन्दे दयो-अपिकार्ष्मर्यमयाःस्युः यदिकार्ष्मर्यमयान्नविंदे दयोअपिबैल्वास्यु रुपोखदिरा अथोदुम्बरा एतेहियज्ञियावृक्षाइति ब्रह्मपुराणे। पलाशाश्वत्थ न्यग्रोध प्लक्षवैकंकतोद्भवाः। कार्श्म यौदुम्बरो-विल्वश्चन्दन.सरलस्तथा शालश्चदेवदारुश्च खादिरश्चैतियज्ञि-याः। चमसपात्रमत्र प्रमाणमेव प्रयोजनापेक्षं। अर्थात्परिमा-णमिति परिभाषासः धातुमयपरिमाणंवाहीनमितिभाल्। पवि-त्राण्यनंतर्गर्भाणि साग्राणि कात्यायनोक्तानि। पवित्रांतर्हि-तेति अर्घपात्रे पवित्रं निधायोदकं क्षिपेदितिज्ञापयति। कुशं विनोदकस्याग्रहणात्। तथाचश्रुतिः। स्नलोऽभ्वा वृदंसर्वं हत्वाशि खइत्युपक्रम्य तदेवसामतोभ्यां पवित्राभ्यामपरंत्तीत्युपसंहारः एकैकस्मिन्निति मन्त्रावृत्तिदर्शकं। ततश्चपलाशादि दारुपा-

त्वे पुरय। देवतमस्त्रेषु द्वे प्रागग्रे सव्यादिना प्रागग्रपवित्रद्वयं पि त्वा दक्षिणाग्रेषु दक्षिणासस्त्रे अपसव्यादिना पवित्रत्रयं दक्षिणाग्रं निधाय शन्नइतिमन्त्रेण प्रतिचमसमम्बुत्त्वाकृत्वागन्ते,पश्चा सित्रे- दित्यर्थः। तथाच विष्णु। दक्षिणाग्रेषु दक्षिणासस्त्रेषु चमसेष्वप आसिञ्चेच्छन्नइति। अत्र केपवित्रकरणमनुपदेशात्तूष्णीमिति। तन्न। मन्त्रेण विधानात्। तथाच योगियाज्ञवल्क्य.। पवित्रे- स्थइतिमन्त्रेण द्वे पवित्रे चकारयेत्। नांतर्गर्भं कुशच्छिन्नं कौशेप्रा- देशसम्मिते। अत्रैकेपवित्रेस्थइति मन्त्रलिंगस्यपवित्रे करोति कुशैःसमा नप्रशीर्णाग्रैः कुशैश्छिनत्ति पवित्राभ्यामुत्पू,नातीत्या- दिवाक्यानाच पवित्रद्वये वेयर्थात्पवित्रद्वयमेवपित्रे पीति। तन्न। अथोपितीमिश्युरिति श्रुत्यैवस्थलान्तरे पवित्रत्रयस्योक्तत्वात्। चतुर्विंशतिमतेपि। द्वे द्वे शलाके देवानांतिस्रस्तिस्रस्तुपार्वणे। ए- कोद्दिष्टे शलाकैका श्राद्धे दर्भे पुनिर्क्षिपेत्। यत्तु माध्यंदिनाना द्वे द्वे तु पवित्रे पितृकर्मणीति तन्न त्रेणापवित्रद्वयच्छेदनपरं। नत्व- र्घपवित्रनिधानपरं। अतएवपवित्रेस्थइत्यनेनपवित्रेकुशैश्छित्वा- न्यतृतीयेन सहार्घनिधानमितिसिद्धम्। तथाच हेमाद्रिपद्धतौ। पवित्रेस्थइति च्छिन्नमगर्भयत्कुशद्वयम्। कुशरूपेणप्रादेश मात्र न्त त्स्यात्पवित्रकमिति। अत्रविशेषोयज्ञपार्श्वे। औषधीमन्त्रेच्छि- त्वा न गुष्ठाङ्गुलिपार्वणे। छिद्यात्प्रादेशमात्र तु पवित्र विष्णुदै वतमिति॥

## सू० एकैकस्मिन्नेवतिलानावपति तिलोसीति॥ ११॥

तिलानितिग-ाद्य पठन्। १ के कस्मिन्निति प्रतिपात्रं ति

लोसीत्यनेनतिलानामवमेदित्यर्थः अवश्यमनुमदेशा त्तिलक्षेपो देव- पात्रेप्वेपोतिकर्कः। नन्वेकैकत्रिन्स्वनुवर्तमाने पुनरेकैकस्मिन्निति किमर्थं उच्यते। तिलोसोतिमंत्रे पितॄन्मोधा हीतिबहुवचना न्तेन पितृशब्देनैकद्रव्यत्वादनुचित सकृन्मंत्रपाठप्रसक्त्यर्थं। तथाच। मन्त्रोदेव्यापयः त्त्विला तिलोसीत्यावपेत्तिलान्। आवृत्तिः प्र- तिपात्रं स्यान्मंत्रस्य लोकइष्यते। अतश्चत्वोदोदित्यादिति। नि- श्चितमेतदित्येवमव्दार्थः। ननुगंधादिमचपोपिमन्त्रे न गंध पुष्पंच तूष्णीमितिवाक्यात्। अतोमत्रस्याज्ञातत्वात्तिवरपि स्याद्दाप्रयोगः। एवमभिन्नदाविपात्राण्युक्त्वा भिन्नमतिमसवार्षेन विधातुमयपावाणिाह ॥

## मू॰ सौवर्णराजतौदुम्बरखङ्गमणिमया नांपात्राणामन्यतमेषु ॥ १२ ॥

मणिमयानि शंखशुक्त्यादीनि। एषांमध्येयेषु येषुचिदित्यर्थः तथाचब्रह्मपुराणे। सौवर्णरौप्यताम्राणां स्फाटिकंशंखशुक्तयः। भिन्नान्यपिनियोज्यानि पात्राणिपितृकर्मणि। हारीतोपि। काञ्चनेनतुपात्रेण राजतौदुम्बरेणवा दत्तमक्षयतां याति खड्गे- नापिकृतेनतु। आपत्स्तंबेपितैः। परिभाषा स्मृती। षट्त्रिंशु- लमवित्सात पितृणांरजतंमतं। दशांगुल तुदेवानां सौवर्णेन्ता- म्रमेवचेति। औदुम्बरन्ताम्रं। धातुसन्निधेःतदुक्तं। मणिक्षेत्र- सान्निध्ये योऽप्रसिद्धार्थउच्यते। तत्सन्निधानसामर्थ्यात् रूढ्या- वोनुगम्यतदृति। वाचोब्धतुर्याजियत्वेनैवसिद्धः। सुवर्णादिप्यो मयड्विकारे। राजत तुपितृषु एव। तथाचवायौ। तथापिपितृ भोज्येषु पितृणांरजतं मतं। अमंगल्यंतुयत्नेन देवकार्येषुवर्जयेत् ॥

## * यानिवाविद्यन्ते ॥ १३ ॥

वाशब्दः सौवर्णादभावविकल्पे । सौवर्णादिविहिताभावेविहित प्रतिषिद्धांश्चायसमृन्मयादीनीत्यर्थं. । तेषांयानिवाविद्यन्तइति सानुशयमभ्यनुज्ञानात् । विहितप्रतिषिद्धत्वंतेषांस्मृत्युक्तं। तथाच ब्रह्मपुराणे कांस्यभाजानिवर्ज्यानि पितृदैवतकर्मणि। पैठीनसिः लोहसीस कांस्य पाषाणभिन्नपात्राणि भग्नपात्राणिचवर्जयेदिति। कांस्यरजतपर्ण ताम्रपात्राणिभोजनार्थयोग्योपकल्प्यानि । देवलोपी-पि अयसमृन्मयानिसुरांपिपर्णमयांस्तथा।यानिवाविद्यन्तइति प्र-तिषिद्धेतराणीतिवा। विहितप्रतिषिद्धानि पूर्वपक्षयसिद्धान्तमाह॥

## मू० पलाशपत्रपुटेषुवा ॥ १४ ॥

वाशब्दः प्रागुक्तविहितप्रतिषिद्धनिषेधार्थः ॥ तथाचहस्ययाज्ञव-ल्क्यः । मृद्भाजनी तथाकांस्य भार कूटादिसंभवं। त्रपु सीसक लौ-हाना सर्वपात्राण्विवर्जयेदिति । धर्मप्रदीपेपि । मृन्मयागतमर्थेच मृत्तिकागंधलेपनं । हतपुष्पयोदद्यात् निराशाः पितरोगताः-कात्यायनोपि । आसुरेणतुपात्रेण यस्तुदद्यात्तिलोदकं । पित-रस्तस्यनाश्नन्ति दशवर्षाणिपञ्चचेति । अतोविहितप्रतिषिद्धेभ्यः पत्रपुटाएवग्रेयस्कराइत्यर्थः । कार्कस्वार्यं मृन्मयस्यौकारस्तुइस्तघ-टितविषयः । कुलालचक्रनिष्पन्नमासुरं मृन्मयस्मृतं । तदेवहस्त घटितं स्थाल्यादिदैविकंसवेदितिवाक्यात् ॥

## मू० एकैकस्यैकैकेनददातिसपवित्रेषु-हस्तेषुयाद्दिव्याइति ॥ १५ ॥

एकैकस्येतिपित्रादिनिर्देशः । एकैकेनेति एकैकस्येत्येतावद्-

तिरेकेनैकार्घेण त्रयाणान्दानमिषेधार्थी । अतएकैकस्यैकैकेनेति
नतन्त्रमित्यर्थः । तथाच कात्यायनः । अर्घेऽक्ष्योदके चैव पिण्डदाने
वनेजने । तन्त्रस्य तु निवृत्तिः स्यात् स्वधावाचनिके जपे । एवञ्चत्रया-
णामेकद्विजोपवेशने ऽर्घपात्राणि चौष्य यन्द्विजनं स्थयेत्युक्तं । तथा-
च स्मृतिः । अर्घं स्यादर्घ्यहेतस्याद दातुः श्रपितृसंख्यया । पूरये-
दर्घपात्राणि नविप्राणान्तुसंख्यया ॥ वैजवापोपि । पित्र्यादित्-
यानीप्येवं कुर्यात् पात्राणि धर्मवित् । एकस्मिन्वाबहूनां वा ब्राह्म-
णे पुययाविधीति । सोच्छ्वीपविवादिकमितिशेषः । अत्र सन्देहः ।
वैश्वदेवे एकएवार्घ किंवाद्वौ । उभयथावाक्यदृष्टेः । तथाहि । यज्ञ
पार्श्वचमसे सपवित्रक इति गोभिलायनेनैवमुक्तम् । याज्ञवल्क्योपि ।
यवैरन्ववकीर्याथ भाजने सपवित्रक इत्येकमेव । मात्स्ये । विश्वा
न्देवान्यवैः पुष्पैरभ्यर्च्यासनपूर्वकं । पूरयेत्पात्रयुग्मन्तु स्थापयेद्-
दर्भपवित्रकमिति । प्रचेतसापि । एकैकस्य तु विप्रस्य अर्घपात्रे-
विनिक्षिपेत् । यवोसीतियवान्क्षीर्यगन्धपुष्पैः सुपूजितमिति द्वय-
मेव । कार्ष्णाजिनस्तु एकदेवताकत्वादेकमेवपात्रन्देवमिति ॥ मा-
तामहश्राद्धे वैश्वदेवस्य पृथक्पात्रद्वयमित्यन्ये । इदन्विचार्यम् ।
किमत्र विकल्पः किम्वाव्यवस्थेति । व्यवस्थेति ब्रूमः । तथाहि ।
वैश्वदेवश्राद्धे पक्षद्वयमुक्तम् । तन्त्रपक्षो भेदपक्षश्चेति । तत्रयदि-
भिन्नपक्षे एकमित्युच्येत तदा मात्स्यवाक्यं व्यर्थं स्यात् । अथतन्त्र-
पक्षे एकमिति तदोभयवाक्यसार्थक्यात् । ततस्तन्त्रपक्षे एकस्मि-
न्पक्षे द्वयमिति व्यवस्थया न ग्रन्थविरोध इति सिद्धम् । सपवित्रे त्वि-
त्यत्र च पवित्राण्येवोच्यन्ते । इक्षपवित्राणान्तु पवित्रत्रयः सर्व इति-
स्मृतेरेव सिद्धेः ॥

## सू० असावेषतेऽर्घः ॥ १५ ॥

असाविति सम्बुद्ध्यन्तनाम्नामादुपलक्षणम् । एषतेऽर्घ इति प्रयोगदर्शनात् । अर्घपात्रनिधानं ज्ञायते एतच्चोक्तमासनदाने । ततश्च यथाविहितं सव्यादिना वामहस्ते, अर्घपात्रं गृहीत्वा प्रागग्रपवित्रे देवद्विजकरे दत्त्वा (१) पादप्रभृतिमूर्धान्तमप्रदक्षिणम्पूजां कृत्वा यादिव्या इति मन्त्रे धूरिलोचनपुरूरवार्द्रवसनामानौ विश्वेदेवा एष वोऽर्घ इत्यर्घं दक्षिणहस्तेन देवतीर्थेन दत्त्वा । एवं पित्र्ये पितृदक्षिणाग्रपवित्राग्रे द्विजकरे दत्त्वा शिरःप्रभृतिपादान्तमप्रदक्षिणं संपूज्य । यादिव्या इत्यनेनार्घं पितृतीर्थेन संबन्धनामादिभिः पितरसम्बोध्य दक्षिणहस्तेनैव एतेऽर्घ इत्यर्घं दद्यादित्यर्थः । तथाच प्रचेताः । दत्त्वा हस्ते पवित्रं तु कृत्वा पूजां च पादतः । पादप्रभृति मूर्धान्तं देवानां पुष्पपूजनम् । यादिव्या इति मन्त्रेण हस्तेऽर्घं विनिक्षिपेत् । ततो वामेन हस्तेन गृहीत्वा चमसानुक्रमात् । शिरःप्रभृति पादान्तं नमो व इति पैतृके ॥ पितृतीर्थेन तत्तोयं दद्याद्दक्षिणपाणिनेति । अर्घे च एकद्रव्यत्वादर्घदानकर्मोत्पत्तौ सकृन्मन्त्र इति । तत्कात्यायनाचार्यैर्निरस्तमित्युपेक्षितं ॥

## सू० प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधाति ॥ १६ ॥

प्रथमं पात्रं पित्र्यं नदैव । तथाच स्मृतिः । प्रथमे पितृपात्रे तु सर्वान्संभृत्य संस्रवान् । पितृभ्यः स्थानमित्युक्त्वा कुर्यान्न्युब्जमधोमुखम् । दैवपात्रमित्येके । तन्न । पितृपात्र इति विशेषात् । कात्यायनोऽपि । पितृपात्रे तदुत्तानं कृत्वा विप्रान्विसर्जयेदिति । संस्रवाः

(१) गन्धं सयवपुष्पम् आदाय चरणादिशिरोन्तकम् ॥ अर्चेत्सर्वेण द्यां दत्तार्घोदकन्तथा ।

पात्रसंलग्ना अविशिष्टोदकादयः। तथाचश्रुतिः सएषवोऽत्रैवखलु-परिशिष्टोभवतीति। वक्ष्यत्यङ्कुशातिशाद्यपेक्षम्। अत्रकेचित्अन्दे-वेभ्यस्थानमसीत्यृत्तानं विधाय पित्र्यंन्युब्जंविधेयमिति। पित्र्यमि-त्यन्ये। विचार्यमिदम् किंप्रतिश्राद्धं पात्रकरणमुतपितृश्राद्धइति। यदिप्रतिश्राद्धं तदाद्यादशदैवत्ये पात्रस्यकम्मन्त्रविरोधश्चस्यात्। अथमन्त्रोहेनाविरोधइति तर्हि पितृपात्रविध्यनर्थक्यात्। यत्तु प्रथ-मपेतृकम्पात्रन्तस्मिन्पैतामहं न्यसेत्। प्रपितामहन्ततोन्यस्यनोद्धरे न्नविचालयेदितियमवाक्ये पात्रत्रयस्यैवैकीकरणं तन्मातामहश्रा-द्धपक्षेपोध्यं दृश्यतेचशाखाभेदेनश्राद्धम्। तथाच विष्णुपुराणे। प्राङ्मुखान्भोजयेद्विप्रा न्देवानामुभयात्मकान्। पितृमातामहानाञ्च भोजयेच्चोदङ्मुखान्। पृथक्तयाकेचिदाहुः श्राद्धस्यकरणंनृप। एक-त्रैकेनपाकेन वदन्त्यन्येमहर्षयइति। तदेतच्छाखाभेदाभिप्रायम्। तस्मात्पितृश्राद्धएव सर्वत्रसर्वशब्दस्यासङ्कोचेन प्रवृत्तत्वात्पितृभ्यः स्थानमसीति पितृशब्दस्यसर्वपितृविषयत्वाच्च पितृपात्रमेकमेवयु-क्तमितिसिद्धम्। ततश्चपितृपात्रे देवादिसर्वपात्र संस्रवान्नि षिच्य पितृद्विजवामतः पवित्रोपरिवोमुखन्निदध्यादित्यर्थः। तथा चयाज्ञवल्क्यः। समविवं पितुः पात्रं दक्षिणाधोमुखंन्यसेत्। कात्यायनोपि। कुशवत्यां भूमावधोमुखं कुर्यात्तस्योपरिचकुशा-निति। शौनकोपि। नोद्धरेत्प्रथमंपात्रम् पितृणांयस्यपातितम्। आश्तास्तत्रतिष्ठन्ति पितरःशौनकोऽब्रवीदिति। उद्धरेद्यदितत्पात्रं ब्राह्मणोज्ञानदुर्बलः। अभोज्यन्तद्भवेच्छ्राद्धम् क्रुद्धे पितृगणे गतइ-ति। सारस्ये। पितृपात्रन्निधायाथ न्युब्जमुत्तरतोन्यसेत्। अथोत्त-रइत्युत्तरस्याग्निशौतिकल्पतरुः। उत्तरशब्दस्यवामसवाचकत्वात्। तथाचलिङ्गम्। उत्तरतआयतनाद्धिस्तीति। कात्यायनश्च कृत्वा-

ग्युञ्जन्तिलैर्युक्ता न्दक्षिणाग्रमतःपरं । पितृपात्रं निदध्यात्तु देवपि-
त्रोश्चमध्यतइति ॥ उशनाः । गन्धादिभिःपूजयेत्तन्न्युब्जम्पात्
वैजवापोपि तस्योपरिकुशान्दत्त्वेति ॥

# * अन्नगंधपुष्पधूपदीपवाससाञ्चप्रदानम् १७,

तानिसुगन्धीनिकण्टकिजान्यपिदद्यादिति जपादिकुसुमंभिं-
टीरूपिका • सकुरण्टिकाः । पुष्पाणिवर्जनीयानि श्राद्धकर्मणिनि-
त्यशः । जपा ओड्रपुष्पम् । आदिशब्दच्छिल्ल्यादिरक्तानि । रूपि-
कार्कवर्णः । कुरंटकःपीताम्लानः । स्मृतिमंजूषायां ।शिरीष बिल्व
धत्तूर काञ्चनाराटरूषकं । (१) बकंचपारिभद्रश्चयीतजातींचवर्जये
त्।धूपोगुग्गुलादिः। तथाविष्णुधर्मोत्तरे। धूपोगुग्गुलकोदेयस्तथा-
चन्दनसारजः । अगरुश्चसकर्पूरस्तुरुष्कस्त्वक्तथैवच । तुरुष्क.सि-
ल्हकः । त्वग्लवंगं । मरीचिः । चन्दनागुरुणीचोभेतमालोशीरप-
द्मकं । घृतार्क्तमधुनार्क्तंचगुग्गुलंधूपमेवच । तथा। तुरुष्कंगुग्गुलंचै-
वघृतार्क्तंयुगपद्दहेत् । घृतंनकेवलंदद्याद्दुष्टंवात्रणगुग्गुलम्। तृण-
गुग्गुलः । सर्जरसः । धर्मप्रदीपेपि । घृतधूपद्वयोर्दद्यान्निराशाः
पितरोगताः ।कात्यायनः ।श्राद्धे धूपंप्रयत्नेन दशांगंमधुमिश्रितम् ।
दद्यादगरुजंचापि पद्मकन्दं वदारुजमिति.। वर्ज्यमाहविष्णुः ।
जीवजंसर्वंधूपार्थंइति । जी वजं कस्तूर्यादि । दीपोघृतादिद्रवे-
ण । तथामरीचिः । घृतोवातिलतैलाद्वानान्यद्रव्यात्तुदीपकम् ।
नान्येतिवसादिनिषेधो नकुसुंभादितैलानां । घृतेनदीपोदा-
तव्य स्तिलस्वाप्यौषधीरसैः । वसामेदोद्भवन्दीपम् प्रयत्नेनविवर्ज्ज-

(१) तुलसीनिषेधोभविष्ये केतकीतुलसीपद्मबिल्वपत्रञ्चवर्जयेत् द्रोणपुष्पंकरवीर
चपत्रं चंपकस्तथामल्लिका कुन्दश्चौचनोदद्याद्वौमतञ्चकदम्बञ्च पिण्डे जातीचनो
दद्यादैवीमकेणनाचयेत् ॥

येदितिवाक्यात्। वासः। कार्पासादि। तथाकौशेयंक्षौमकार्पासं दुकूलमहतन्तथा। श्राद्धेष्वेतानियोदद्यात् त्कामानाप्नोतिपुष्कलान्। चकारो यज्ञोपवीत तुलस्यादि समुच्चायकः। तथा। चंपकंशतपत्रं च भृंगराजंचबालकं। तुलसीमालतीपत्रं पितृणान्तुष्टिकारकं। तुलसीनिषेधेस्मृत्यर्थसारः। अर्घ पिण्डयोर्विधिनिषेधाविचारविरोधा इतिकश्चित्। प्रेतश्राद्धश्राकविषयो निषेधइत्यन्य:। दीपवस्त्रोपवीतकमित्युक्तम् वस्त्राभावेयज्ञोपवीतकमितिखादिरं। बृहद्गारुडवस्त्रोपि। तुलसीभृङ्गराजञ्च अपामार्गं शमीतथा। पितृमूर्धनि योदद्यात् त्स्यातिपरमांगतिमिति। अत्रसंशयः। किंगन्धादिदानं तन्त्रेणोतमतियुक्तमिति। उभयथाप्यदृष्टे:। तथाहि आश्वलायनः। एपतेगन्धः एततेपुष्प मेषतेधूप एतत्ते॰आच्छादनम्। विष्णुरपि। नमोविश्वेभ्योदेवेभ्यइत्येवमादौ प्राङ्मुखेभ्यो निवेद्यपित्रादिभ्यो नामगोत्रेण उदङ्मुखेभ्यइति। याज्ञे। दद्याद्गन्धाच्छादनम्। अत्रेत्ययसराधैरिति कर्कादयः तन्त्र। तत्रपाठादेवलभ्ये:। तत्रादत्रेतिपात्रे वृत्यन्ये। तदपिककौरिभिरनादृतम्। अर्घोत्तरं विप्रपूजाविधे:। तथाचहृहन्याज्ञवल्क्यः। दत्वार्घम्पूजयेच्छ्राद्धाङ्गन्धधूपानुलेपनैः। मात्स्येपि। याद्व्यन्यत्वर्द्धमुत्सृज्यदद्याद्गन्धादिकन्ततइति। तस्मादत्रेतिकाण्डानुसमयेसंमूच्य। गन्धादिदानेपदार्थानुसमयोद्योतितः। अतोनगन्धादिदानं दैवपूर्वमित्यर्थः। तथार्थेवयाप:। तंस्योपरिकुशान्दत्वा प्रदद्याद्दैवपूर्वकम्। गन्धपुष्पञ्चधूपञ्चदीपं वस्त्रोपवीतकमिति। गन्धश्चंदनादिः। तथा। चंदनागरुकर्पूरपद्मकं कुंकुमन्तथा। कस्तूरिकादयोगन्धाः पितॄणान्तुष्टिकारकाः पुष्पाणि मल्लिकादीनि तथास्मृतिचन्द्रिकायाम्। मल्लिकामालतीश्वेतयूथि-

ख्योदकादि व्यतिरिक्तगन्धादौ तन्त्रमेवोक्तम्। एवंविप्रतिपन्ना-श्चैके सूत्रोक्तस्यादर्यवोधूपदूति यःशब्दनिर्देशाच्च गन्धादौ तन्त्वम-तोले स्वस्मत्पितृपितामहप्रपितामहा अमुकशर्म्मण एतेप्रांगन्धा-दीनां तृतीयस्तृतीयोंयसेभ्य स्वधेतिप्रयोगद्दूति । अन्येतु । पित्रा-दीनामग्नोपोमादिव निमिलिता नांदे वतात्वा द्गन्धादीनांच प्रत्ये-कन्दानस्यविधानाच्च नेदंयुक्तम् । तस्मादस्मत्पितरमुकशर्म्म न्नस्म-त्पितामहास्मत्प्रपितामह इत्येवङ्गोत्राद्युच्चार्य्य एषगन्धःस्व धेति प्रयोगइत्याहुः । विचार्य्यमिदम् । यद्यग्नोपोमवन्निमिलित देवतात्वाभावात्पृथक्पृथक्दानमित्युच्येत तदार्घ्यादिव्यतिरिक्तप-दार्थेषु तन्त्वविधेर्गोनाणामाघनेप्रोक्तमित्यादि वाख्यानान्त्ववेयर्थ्य-स्यात् । अथासनादिदानेपु तन्त्रविधेर्गंधादिदानेपि तद्युक्तिसर्ह्दि-माश्चायनादुक्त पृथग्विधेर्वैयर्थ्यं नित्यभयथापि संदेहःस्यात् । तस्मादावन्यायमूलविधानं तन्त्रं तन्त्वं यत्रयत्रैव तन्त्रतयैवेत्युभ-यविध्योःसिद्धिः । गंधादिपूभयविधे हेयमानत्वादुभयानुष्ठानं । गंधादयतिरिक्तेतु तन्त्वमितियुक्तम । अतश्चोस्मत्पितरमुकशर्म्म-न्नस्मत्पितामहास्मत्प्रपितामहेतिनामाद्युच्चारणे न पृथगुद्दिश्य-वाक्यान्ते एषबोगंध स्वधेत्युभयथाकार्यं युक्तमिव भाति । गंधा द्युपादाने कात्यायनः । गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभ वानि च । धूपञ्चैवानुपूर्वेण अग्नौकुर्यादतःपरम् । एवंगंधादिद-त्वाऽऽचम्य सपूर्णपृष्ठादत्त्वा संस्रवोदकेन पुत्रादिकामो मुखं-ममार्ष्टि । तथाकात्यायनः -। श्राद्धारम्भेवसानेच पादशौचे तथा र्च्चने विकरेपिंडदानेच षट्स्वाचमनंस्मृतम्। कात्यायनः । संस-वाग्समवनीय पुत्रकामोमुखमनक्तीति ।

इति श्री श्राद्धकाशिकायान्द्वितीयाकण्डिकासमाप्ता ॥

वऽऽर्थोनिर्वापेमसुपस्थिते। वौगाक्षिरपि। पित्रर्थं निर्वपेत्पार्वणं वैश्वदेवार्थमेवच। वैश्वदेवं नपित्रर्थं नदार्शं वैश्वदेविकं। देवलोपि। तथेत्रयं चितोदाता स्नात्वाप्रातः सहांबरः। आरभेत न वैभोगडे-रंगारम्सुतांबवैः। तिलानाविकिरेत्सत्र सर्वतोबंधयेदजान्। आसुरीपहतंसर्वं द्रव्यं शुध्यत्यजेनच। ततोन्नं बहुसंस्कारा नेकव्यंजनभक्ष्यवत्। चोष्यपेयसमृद्धंच्च यथाशक्त्युपकल्पयेदिति। मार्कण्डेयोपि। पृथक्पाकेननेत्यन्ये केचिदिच्छंतिपूर्ववत्। नित्यश्राद्धम्पृथक्पाके नेत्येके। श्राद्धपाकादेवेत्यन्ये। किञ्च। मातामहश्राद्धपक्षे प्रेठोनमिः। विभिन्नोनेयतः श्राद्धे नान्नंतिपितृदेवताः पृथक्पाके नैवतत्र्या श्राद्धमातामहस्यवेदिति। तस्मात्पृथक्पाकः।

## मू० कुरुष्वेत्यनुज्ञातःपिंडपितृयज्ञवद्धुत्वा ॥२॥

द्विजैः कुरुष्वेत्यनुज्ञातः पिंडपितृवज्जुहुयादित्यर्थः। अत्रपिण्डपितृयज्ञवदुपचार इतिप्रागुक्तेपिण्डपितृयज्ञवदितिपुनरुक्तिः परिसंख्यानार्था। तेनसाग्नेर्यथापिंडपितृयज्ञे परिस्तरणादितथाश्राद्धे नभवति किंत्वपसव्यादिनापर्युक्ष्य मेक्षणेनाहुतिद्वयमाहिताग्नेर्दक्षिणाग्नौस्मार्ताग्नेरौपासने यथोपदेशंभवतीत्यर्थः। अत्रकश्चित्। अग्नौकरणहोमस्य आत व्यउपवीतिना। प्राङ्मुखेनैवदेवेभ्योजुहोतीतिश्रुतिःश्रुतेः। अपसव्येनवाकार्यो दक्षिणाभिमुखेनच। निरूप्यहविरन्यस्मा अन्यस्मैनहिहूयतइतिकात्यायनवाक्यात्सव्येनजुहुयादग्नावग्नौकरणआहुती इतिहस्याश्वलायनवाक्यदृष्टेः साग्निः सव्येनेतरोऽपसव्येनेति। तन्न। मजधर्मेन गार्हपत्यं प्राचीनावितीतिश्रुत्या पिण्डपितृयज्ञवदिति-

सूत्राच्चोभयोरपसव्येनैवविधेः। उपवीतिनेत्यस्य पूर्वमुक्तत्वा दप-
सव्येनेत्यस्य चमिद्धान्तत्वा दपसव्येनैवसर्वेषामित्यन्ये। नेदम-
पि। अथातोगोभिलोक्तानामन्येषांचैवकर्मणामितिकात्यायन-
प्रतिज्ञायाः सामगानांसव्येन यजुषामपसव्येनेतिवाक्यद्वयाव्यव-
स्थितेः। अतएवातऊर्ध्वंप्राचीनावीतिना कर्तव्यमितिगोभिलेना-
ग्नौकरणानन्तरमपसव्यमुक्तं। तस्मात्सामगानांसव्येन यजुषाम-
पसव्येनेतिसिद्धं। तथाकात्यायनः। स्वाहास्वधानमःसव्य मपस-
व्यन्तथैवच। आहुतीनांयथासंख्या साचगम्याक्रमूक्ततः। हृदया-
ज्ञावणः। छन्दोगाजुहुयुःसव्येना पसव्येनयाजुषाइति। अतस-
श्च। किंसाग्निरग्नौ किंवाहस्तेग्नौकरणंकुर्यादिति। उभयवि-
धवाक्यदृष्टेः। तथामार्कण्डेयः। आहिताग्निस्तुजुहुयात् दक्षिणा-
ग्नौसमाहितः। औपसदेऽनाहिताग्नि रन्यभावेद्विजेषु चेति। अव-
तुशब्दद्वयंसर्वाधानार्धाधानपक्षौमूचयति तेनाहिताग्निःसर्वाधाने
दक्षिणाग्नावेवार्धाधानेत्वौपासनएवजुहुयादित्यर्थः औपसदे गृह्या
ग्नौ। अन्यभावोवक्ष्यमाणः। तथा। हस्तेग्नौकरणंकुर्या दग्नौवा-
साग्निकोद्विजइति। अत्राग्नेः सन्निधानाद्यभावे हस्तेलौकिका-
ग्नौवाग्नौकरणं साग्निःकुर्यादितिमाधवस्मृतिचन्द्रिकाकारादयः।
उदाहरन्तिच। आहरेद्दक्षिणाग्निन्तु होमार्थंवैप्रयत्नतः। अन्य-
थ्यंलौकिकेवापिजुहुयात्कर्मसिद्धये। अन्यर्थसोपासनाग्निकार्यार्थं
लौकिकाग्नौहोमइत्येके लौकिकेकल्पतरुकारादयस्तुलौकिकमा-
वसथ्याग्निमाहुः। विचार्यमेतत्। यदाग्नेः सन्निधानाद्यभावे सा-
ग्नेर्लौकिकाग्निस्वीकारस्तदानपेक्ष्यक्रियोहोमो लौकिकाग्नौ-
विधीयतइति मनुवाक्यमनर्थकम्। अन्यभावेतुविप्रस्य पाणावे-
वोपपादयेदितिनियमभङ्गश्चस्यात्। अथाग्नौकरणमिति गोभि-

कत्वादुत्खननादिभ्यो लौकिकाग्नौविशिष्टत्वाच्च साग्नेर्लौकिके-
एवेतितदा प्रासङ्गिकतीर्थादावपि श्राद्धप्राप्तौलौकिकेऽग्नौकरण-
मतिप्रसज्येत। लौकिकाग्नेः सुसम्पादकत्वादग्न्यभावएव नस-
म्भवतीत्यग्न्यभावेतु विप्रस्येत्यस्यासङ्गतेश्च। तस्माल्लौकिकभाव-
सध्याग्निः। ततश्चयस्ते ऽग्नौकरणङ्कुर्यादग्नौवासाग्निकोद्विज
इत्यत्रवाशब्दोव्यवस्थितविकल्पे। तेनविद्यमानेश्रौतेस्मार्तेवाग्नौ
तत्रहोमस्तदभावेहस्तेन लौकिकाद्यर्थः। अग्न्यभावः पञ्चधा।
प्रागभावः प्रध्वंसः सन्निहिताभावो ऽधिकाराभावोऽत्यन्ताभाव-
श्चेति। विवाहात्प्राक्प्रागभावः। तदूर्ध्वमाहृताग्नेः प्रमादादि-
नानाशे पुनराधानात्प्राक्प्रध्वंसः। देशभंगादावरणिसमारो-
पादौकृते सन्निध्यभावः। पशुद्रव्यादिस्पृष्टेग्नौप्रायश्चित्तम्वि-
नाधिकाराभावः। नैष्ठिकब्रह्मचर्यस्त्वभावेनात्यन्ताभावइति।
यस्त्वग्न्यभावः अतस्तावद्यावद्भार्यांनविन्दतीत्यभावउक्तः। सोय-
मप्येकोऽभावइति पृथग्दर्शनार्थं। नत्वयमेवाभावइतिनियमार्थं।
पूर्वोक्तविभागव्याघातात्। प्रागभावात्यन्ताभावयोरेव ऽग्न्यभावादे-
वाग्नौहोमाभावः। प्रध्वंसाधिकाराभावयो रावश्यकविधौसां-
कल्पिकमेवश्राद्धम्। अग्नौकरणम् अरणिसमारोपादौसान्नि-
ध्याभावस्था वश्यश्राद्धे साग्नेरपि द्विजहस्तएवहोमइति। तथाव्या-
सः। त्यक्ताग्नेःपार्वणन्नास्ति नैकोद्दिष्टमपिण्डनम्। अत्यक्ताग्ने-
स्तुपिण्डोक्तिम्तस्मात्सङ्कल्प्यभोजयेत्। आलस्येन नास्तिक्यादिना
वायोग्निंत्यजति तस्यैकोद्दिष्टं पार्वणसपिण्डीकरणादि सर्वश्राद्धे-
ष्वनधिकारित्वं; संकल्प्यभोजयेत्। तद्व्यतिरिक्तस्यानग्ने रग्न्यस-
न्निधानेपि सांगपिण्डश्राद्धेधिकारइत्यर्थः। ततश्च हस्तेग्नौकरणं।
संकल्पेतु। संकल्पं यदाकुर्यान्नकुर्यात् पात्रपूरणम्। नावाहना-

ग्नौकरणे पिण्डांश्चैवनदापयेत् । संकल्प्येतुयद्राश्राद्धे नकुर्यात्पा-
त्रपूरणम् । विकरस्त्वनदातव्य इतिस्पष्टमिश्रोदितमिति । तस्मा-
न्नलौकिकेग्नाविति मिदं । अथ राविधुरादीना मग्नौकरणस्यै-
ध्माधानाज्यभागपूर्वस्य विधानात्तस्यचहस्तेनुपयुक्तत्वात्तद्विषयो
लौकिकाग्निस्वीकारः । यदुक्तं हस्तेहोम इति तत्किन्देव-
द्विजकरे पित्र्यापित्र्यइति । उभयथाप्यनेकवाक्यदृष्टेः । तथायमः
नाग्नौकरणवत्स्व होमोदैवकरोभवेत् । पर्यन्तदर्भानालीयं यतो-
ह्यग्निसमोद्विजइति । कात्यायनोपि । मातामहस्यभेदेपि कुर्या-
त्तत्स्यमाग्निकः । भेदेपृथग्वैश्वदेवं श्राद्धे तन्त्रं चसाग्निके । मा-
तामहस्यापि मातामहद्विजकरेप्यग्नौकरणंकुर्यादितिपित्र्यकरे-
पर्याद्युक्तम् । तथा अनग्निकस्यविप्रस्य हस्ते ग्नौकरणंभवेत् ।
दैवपूर्वहितत्कुर्यात् पित्र्यस्यसदनारभ्यं । अन्यत्र । अनग्निकस्तु-
योविप्रः श्राद्धं कुर्वीतपार्वणम् । दैवपाणौहिकुर्यादौ शेषं दद्यात्तु-
पैतृके । यमोपि । दैवविप्रकरेऽनग्निःकृत्वा ऽग्नौकरणंद्विजइति ।
एवंविवादेदैवपित्र्यकरयोर्विकल्पइत्येके । साग्निःपितृकरे निर-
ग्निर्दैवइत्यन्ये । इयमपिविचार्यं । आधेसाग्नेरग्निसन्निध्यादौ ।
पितृद्विजहस्तपयानुकल्पत्वेन विधानात् । द्वितीयेतुश्राद्धविशेषा-
णां यस्तित्त्हेमस्यप्राप्यमितत्वे नामार्थविकल्पात् । पिण्डपितृय-
ज्ञवदित्यतिदेशेन प्राचीनावीतादिप्राप्तौ देवद्विजकरेणदमानुप-
पत्तेश्च । तस्मात्साग्नेरन्यसान्निध्यादौ काम्यादिषु श्राद्धेषु पि-
त्र्यद्विजएवेति । पूर्वतराग्नाविति मिदम् । तथागृह्यम् । अन्वष्टक्या-
थपूर्वेद्युर्मासिमाश्रयपार्वणम् । काम्यमभ्युदयेऽष्टम्यां मेकोद्दिष्ट-
मथाष्टमम् । चतुर्ष्वाद्येषुसाग्नीनांवन्हौ होमोविधीयते । पित्र्यब्रा-
ह्मणहस्तेस्या दुत्तरेषुचतुर्ष्वपि । अन्वष्टक्यंनवमीश्राद्धम् । पूर्वे-

दुःसन्नमीश्राद्धम् । मासिमासिकृष्णपक्षश्राद्धम्पार्वणममावास्या-स्यं । कृत्तिकादिनक्षत्रवारादौ । अभ्युदये वृद्धिश्राद्धं । अष्टम्यामष्टकाश्राद्धं । एकोद्दिष्टंसपिण्डीकरणलक्षणम् । तस्मादाहिताग्नेःसर्वाधानपक्षे दक्षिणाग्नौ अर्धाधानेवौपासनेस्मार्त्ताग्नेः सत्त्वाग्नौतथैव । उभयोरप्यग्न्यसन्निधावावश्यकश्राद्धे सन्निहितेप्यग्नौ-काम्यादि चतुःश्राद्धेषु च पित्र्यद्विजहस्तएव । निरग्निवाजसनेयि प्रभृतीनांपिंडपितृयज्ञातिदेशात् दर्भसव्यादिनापित्र्यद्विजहस्तएव। साग्निसामगादीनामग्न्यसन्निधौ सव्यादिनादैवपित्र्यकरयोर्विकल्पः । निरग्नीनामप्येवमेव सव्यादिनादैवद्विजकरएवेतिसिद्धम् । यत्तु, पित्र्ये यःपङ्क्तिमूर्द्धन्य स्तस्यपाणावनग्निमानिति कात्यायनवाक्यम् । तस्यसामगपरत्वेऽयमर्थः । पित्र्येश्राद्धेपितृमातामहश्राद्धे यःपंक्तिमूर्द्धन्यःप्रथमोपवेशितदैव द्विजहस्तार्थः । शाखांतरेतु पैठीनसिः। पितृपंक्तिप्रमूर्द्धन्य स्तस्यपाणावनग्निमानितिप्राग्दर्शितं। नन्वग्नौकरणम् किंप्रतिश्राद्धं किंवैकमिति । तदुक्तम् । दैवपूर्वश्राद्धंकुर्या त्पितृभ्यस्तदनन्तरम् । कात्यायनोपि। मातामहस्य-भेदेपि कुर्यात्तैवसाग्निकइति। अस्यार्थःपूर्वमुक्तः। माधवीये दैव-द्विजकरपक्षेमातामहश्राद्धेपि पृथग्द्वितीयमग्नौकरणमिति। पारिजातेतु । मातामहपृथक्श्राद्धपक्षे सत्यं क्वापग्नौकरणं । अग्निसन्निधौ साग्निःकुर्यादिति । एतदाचाराभावाच्चिंत्यं । आश्वलायनविषयं वा होमद्वयम् । वाजसनेयिनांत्वेकएव होमः । तथा । वैश्वदेवेयदेकस्मिन् भवेयुर्वोदयोद्विजाः । तदैकपाणौहोतव्यं स्याद्विधिविदितस्त्वेति वाक्येवैश्वदेवद्वयस्य पित्र्योपलक्षणत्वे नैकपाणावेवनहोमद्वयमिति । तथाहवृद्धयाज्ञवल्क्यः । मातामहेपुयोदद्यादग्नौकरणआहुती । निराशाःपितरस्तस्य पैशा-

चंग्राह्यमुच्यतइति । यद्वासाग्निकभयत्र निरग्निरेकत्वेतिव्यवस्थे-
त्यविरोधः ।

## सू० हुतशेषन्दत्वा पात्रमालभ्य जपति पृथिवीतद्दति ॥ ३ ॥

पात्रमित्युद्देश्य गत मेकत्वमविवक्षितम् । ज्योतिष्टोमे दशा-
पवित्रेण ग्रहंसंमार्ष्टीतिवत् । अत.सर्वपात्रालम्भः । (१) कांस्यपा-
त्रपरिमाणं स्मृतौ । पञ्चाशत्पलिकं कांस्यं ह्यधिकभोजनायवै । तद-
भावेस्तुसदाकार्यं मभावेहेमरूप्ययोरिति । आलभ्यजपतीति नम-
स्कारः आलम्भः । अत्रसंशयः । किंहुतशेषमात्रन्दत्वा पात्रालम्भ
उतसर्वान्नंपरिविष्येति । उभयथाप्यदृष्टेः । तथा । स्कान्दे । विप्र-
पात्रे पृथिवीतद्दसि चान्नाभिमन्त्रणम् । इदमन्तस्य साङ्गुष्ठं ततो-
न्नपरिवेषणम् । याज्ञवल्क्योपि । हुतशेषम्प्रदद्यात्तु भाजनेषुसमा-
हितः । यथालाभोपपन्नेषु रौप्येषुतुविशेषतः । दत्वान्नम्पृथिवी-
पात्रमिति पात्राभिमन्त्रणमिति । साग्निःपूर्वम्परिविष्य हुतशेष-
न्दत्वा पात्रमालभेत निरग्निस्तुहुतशेषन्दत्वा न्नंपरिविष्य पात्र-
मालभेत । अन्नेषुपरिविष्टेषु हुतशेषन्दद्यदेतिवचनादिति केचित् ।
तन्न । साग्निर्हुतशेषंदत्त्वैवपरिवेषयेदितिक्रमस्य शौनकोक्तत्वात् ।
तथा । कृत्वाग्नौपरिविष्टन्तु पितृपात्रेष्वनन्तरम् । निवेद्यैत्रापस-
व्येन परिवेषणमाचरेदिति । हुतशेषमपसव्येन निवेद्येत्यन्वयः ।
यदुक्तं निरग्निर्हुतशेषंदत्वान्नम्परिविष्य पात्रमालभेतेतितन्न ।
अन्नेषुपरिविष्टेष्वितिवचनस्यवैयर्थ्यापत्तेः । तत्रसाग्निर्हुतशे-
षंदत्वा न्नम्परिविष्य व्यस्तपाणिभ्यांपात्रमालभेत । निरग्निरन्नं-

(१) भोजनपात्रे प्रमाण पत्रमाध्यपर्णवर्जितम् हेमाद्रौ पलाशिभ्योविनान्यपु-
पर्णपात्राणिभोजने अपिवाकाम्यदत्तेषुदेवीयवरे चवाहवि ॥

परिविष्य हुतशेषन्दत्वा तथैवपात्रमालभेतेत्यर्थः । विप्रपात्रे पृथि
वीतइतिवाक्ये एतते॰नपरिवेषणमित्यत्रान्नशब्दो योगेनव्यञ्जन-
परस्तेननान्नपरिवेषणस्य पात्रालम्भानानन्तर्यविरोधः । तथापु-
राणसमुच्चये । भोजनालम्भनङ्कुर्य्याद्दत्वाचान्नंयथाविधीति । (१)उत्-
तानपाणिस्त्वपात्रे । दक्षिणन्तुकरंकृत्वा वामोपरिनिधायच । दैवंपा-
त्रमथालभ्यपृथिवीतेपात्रमुच्चरेत् । (२) दक्षिणोपरिवामञ्चपित्र्यपात्र-
स्यालम्भनमिति । अत्रकेचिद्धुतशेषन्दैवपात्रे नपुनर्देयमिति । तथायमः ।
अग्नौकरणशेषन्तुपित्र्येपिप्रतिपादयेत्प्रतिपाद्यपितॄणान्तुनदद्या-
द्वैश्वदेविके । शौनकोपि । हुत्वाग्नौपरिशिष्टंत्वितिप्रागुक्तम् । वायुपु
राणेपि । हुत्वादैवकरेणाग्निं शेषंपित्र्ये निवेदयेत् । नहिस्मृताः शे
षभाजोविश्वेदेवाः पुराणगैरिति । अन्येत्वविशेषात्सर्वेभ्योदेयमि-
ति । सूत्रकारोपि । दैवपूर्वंश्राद्धमिति । अत्रोच्यते । यादैश्र यदुक्तंनदेय-
मिति तन्न । वाक्यार्थानवबोधात् । तथाहि । अग्नौकरणशेषन्तु
पित्र्येपीत्यपिशब्दाद्दैवेपिशेषदानोपपत्तेः । पितॄणाम्प्रतिपाद्यैव-
दैवेनदद्यात्किन्तुप्राग्दैवे ततःपित्र्यइत्यर्थोपत्रश्रेयः । यदुक्तं हुत्वा-
ग्नावितिवाक्यं तत्साग्निविषयम् । यदप्युक्तं हुत्वादैवकरेणेति
तत्रदैवेहुत्वाशेषम् पित्र्ये दद्यान्नतुवैपरीत्येनेत्यर्थः । वाक्यार्थानव-
बोधादित्युक्तम् । नेतरः । उक्तहेतोःसाग्निनिरग्न्योर्विशेषावगतेः ।
नचोभयत्राकांक्षसत्यविशेषोयुक्तः । क्वचिद्विषयान्तरस्यादृष्टेः । तत-
श्चसाग्नेरग्निहोमोत्तरं हुतशेषदानं पितृपात्रेष्वेव । निरग्नेर्दैव-
करहोमे पितृपात्रेष्वेव पित्र्यकरहोमेतु निरग्नेर्दैवादिसर्वपात्रेषु

(१) उत्तानंदक्षिणं सव्यं नीचम्पात्रेष्वथोपस्पृशेत ॥
(२) पित्र्ये तु विशेषः उत्तानेनतुहस्तेन कुर्वीतदैवायगाहन ॥ अमरतत्र्यवेच्छाद
मपितृणाञ्चैव स्पृशेदितिविषयः ॥

हुतशेषदानमितिसिद्धम् । तथाशाकलायनः । हुतशेषंप्रागदेदत्वा पश्चात्पित्रे इति । कात्यायनोपि । विप्रपाणौततोहुत्वा दद्याच्छेषंपृथक्पृथक् । देवानामादितःकृत्वा पितृपात्रे पुनःक्रमात् । इह मनुः । दैवपूर्वंयतःश्राद्धं तस्मात् हुत्वाप्यवलतः । अग्नौकरणशेषञ्च देवानामादितःक्रमात् । वैश्वदेवादितःसर्वं विकारं पिंडवर्जितं । अग्नौकरणशेषंच तमदद्यात् इत्यदेविके । धर्मप्रदीपेपि । कुर्युः कृतानपाणिस्तुजुहुयादित्युक्तं । शेषंदेवायदातव्यं पितृभ्यस्तदनंतरमिति । साग्निर्देवपूर्वंददात् निरग्निर्नैत्यविरोधहृत्यके । एवंदत्वापिंडार्थमवशेषयेत् । तथाहारीतः । कृतोच्छिष्टमात्रेभ्यः पिंडार्थमवशेषयेत् । धर्मप्रदीपेपि । अन्यभावेतुविप्रस्य हस्तेकृत्वातुदक्षिणे । शेषयेत्पितृविप्रार्थंपिंडा र्थंशेषयेच्चयेति ।

## मू० वैष्णव्यर्चा यजुषावांगुष्ठमन्नेवगाह्यापहता इतितिलानवकीर्येति ॥ ४ ॥

वाशब्दो समुच्चये । (१)वैष्णवीऋगिदं विष्णु रित्यादिका ।(२)यजुश्च विष्णोहव्यं रक्षेति ततोरेकतरेणानखंद्विजांगुष्ठमन्ने निवेश्यापहता इत्यनेनतिलान्पात्रसमन्तात् प्रदक्षिणादिक्रमेणविकरेदित्यर्थः ।निरङ्गुष्ठंतु दत्तं हि पितृणान्नोपतिष्ठतइतिवाक्यात् । नोपतिष्ठत इत्यासुरंभवतीत्यर्थः । तथायमः । निरङ्गुष्ठन्तु यच्छ्राद्धं वहिर्जानुचयद्धुतं । वहिर्जानुचयद्भुक्तं सर्वमेवासुरम्भवेदिति । अत्र के तिलानन्नपात्रेष्वेवावकिरति तन्न । तिलान्सर्वत्रनिक्षिप्य पितृपात्रेपुवर्जयेत् । पितृपात्रे तिलान्दद्यान्निराशाः पितरोगता इतिवाक्यात् । पराशरोपि । सर्वदाचतिलायाह्याः श्राद्ध-

(१) नियताक्षरपादायमानाऋक् ॥

(२) अनियताक्षरत्वम् अपादायमानत्वंयजुः ॥

कालेविशेषतः । पात्रे पुपतितान् दृष्ट्वानिराशाःपितरोगताइति । यत्तु ततोमधुघृताक्तन्तु सोप्यन्नंतिलान्वितं । गृहीत्वादैवतीर्थेन प्रणवेनततःपुनः । एतद्दोन्नमितियुक्त्वा विश्वेदेवांस्तुभोजयेदित्यत्र तिलान्वितत्वमन्नस्योक्तं तद्वैश्वदेवविषयंवा । तथामात्स्ये । उभाभ्यामपिहस्ताभ्या माहृत्यपरिवेषयेत् । प्रशांतचित्तः सतिलं दर्भपाणिरशेषतइति । सतिलमन्नहस्ताद्वयेन परिवेषयेन्नैकेनेत्यर्थः । तथा एकेनपाणिनादत्तं शूद्रादन्नंनभक्षयेत् । पुराणेपि । नापवित्रेणहस्तेन नैकेनविनाकुशान्। नायसेनायसेनैव श्राद्धेतुपरिवेषयेदिति । आदंगायसेसप्तमी । तत्पात्रेन्नं नधार्यमित्यर्थः । सौवर्णराजताभ्याञ्च खड्गेनौदुम्बरेणवा । दत्तमक्षयतांयाति फल्गुपात्रेणचाप्यथेति वाक्यात् । फल्गुउदुम्बरः । पवित्रेणेति सपवित्रकरः स्वयम्परिविष्येदित्यर्थः । फलस्यानन्त्यामोक्ता स्वयन्तुपरिवेषणे इतिवायुवाक्यात् । यत्तु परिवेषणं प्रशस्तंहि भार्ययापितृतृप्तये । पितृदेवमनुष्याणां स्त्रीसहायायतःस्मृतेति । तदन्यापिचश्रा स्वागक्षौ वावेदितव्यं। नविनाकुशानिति केवलनिषेधः । हस्तेदत्वातुयः स्नेहं व्यञ्जनंलवणादिकं । दातारौनोपतिष्ठन्तेभोक्ताभुङ्क्तेतुकिल्विषं। घृतंवायदिवातैलं विप्रोदद्यान्नखच्युतम् । यमस्तदशुचिंप्राह तुल्यंगोमांसभक्षणमितिवाक्यात् । कात्यायनोपि । दर्व्यादेयंघृतान्नञ्च समस्तव्यञ्जनानिच । अपक्वंस्नेहपक्वम्वा नतुदर्व्याकदाचन । स्नेहातान्नञ्चतथाऽपक्वम् । दर्व्यायोदातुमिच्छति । सभूयाद्दासुरापश्च मस्तेयोगुरुतल्पगः । यमोपि । चतुः श्रोतसमायुक्तो हस्तेनोन्मार्जयेद्घृतम् । उभावपोत्रजेयाताम् दाताभोक्तानसंशयः । उन्मार्जनंगोधनम् । सुतंनखैश्चतुर्भिश्च योददात्यापिनाघृतम् । दाता पुण्यंनवाप्नोति भो-

क्षापापगतमृजेदिति। अपहता इति पित्र्ये एव नदैवे ततएवरक्षो-घ्नत्वादितिकर्कः। तूष्णींयवान्विकिरेदित्यन्ये। अत्र यदाग्नौकरणादि काण्यनंनोक्तं तथापीदमन्न मिमाद्याप इदमाज्य मिदंहव्य मित्य-न्नादिकल्पनकार्यम्।तथाकात्यायनः।उभाभ्यामपिहस्ताभ्यां पार्व-णस्यातुतन्द्रढम्। मोचयेद्विप्रहस्त मन्नत्काश्यपयेत्सदा।तथा। स्पर्शनान्तेस्पृशेदन्नम् नकल्यान्तेमिलंधरेदिति। अत्रकव्यादि नोच्चरेदिति कश्चित्तन्न। विप्रोहव्यञ्च कव्यञ्च ब्रूयादन्नेतिवैक्र-मादिति मनूक्तेः। पुराणसमुच्चये। हव्यंदैवेसमुच्चार्य पित्र्याणांक-व्यमेवच। कव्यस्योच्चारणादेव प्राप्नुयुस्तृप्तिमुत्तमां। कव्यादाःपित-रःप्रोक्ता स्तस्मात्कव्यंप्रकीर्तयेदिति। ननु किंपरिवेषणे सव्य-पसव्यविधिरस्तिनवेति। तत्रास्तीत्येके। तन्न। उभयत्रसव्येन विधिः। तथाकार्ष्णाजिनिः। अपसव्येनकर्तव्यं पितृकृत्यंविशेषतः अन्नदानादृतेसव्य मेवमाहातमहेष्वपि। भुजबलोपि। सर्वकर्मा-पसव्येन पितृकर्मणिकुर्वता। अन्नदानादृतेकार्यं तद्वद्विप्रविसर्ज-नमिति। तथा। एकपंक्त्युपविष्टानान् विप्राणांश्राद्धकर्मणि। भक्ष्यंभोज्यासनन्दद्या द्विपरीतन्तुनिःफलम्॥

## मू० उष्णं स्विष्टमन्नंदद्यात्॥ ५॥

उष्णमिति पर्युषितापूपादिनिवृत्त्यर्थम्। तेनस्वल्पकालमपिप-र्युषितमपूपादि श्राद्धे नदद्यादित्यर्थः। तद्विधिः। यवगोधूमजंसर्वं पायसश्चैवविक्रिया।तत्पर्युषितमप्यद्यं स्नेहाक्तञ्चैवयन्नवेदित्यादि। पर्युषितमप्यशक्तौदेयमित्येके। तथायमः। अपूपाश्चकरम्भाश्च धानावटकसक्तव.। शाकम्मांसमपूपञ्च घृतकेनरमेवच। यवागुःपा-यसश्चैव यच्चान्यत्स्नेहसंयुतम्। पूर्वंपर्युषितम्भोज्यं भुक्तन्नैतपरिव-र्जयेत्। देवलोपि। अभोज्यंप्राङ्गराद्यारं शुक्तंपर्युषितञ्चयत्।

अत्रस्रोत्राद्दिषु अपूपभक्षणार्थं पुनरपूपोक्तिः। शङ्खोपि। दधिभ-
क्ष्यस्नगुक्तेषु सर्वं स्रदर्विसंभवम्। व्रचीसपक्वमक्ष्यंस्या त्सर्पियुक्त-
मितिस्थितिरिति। तन्न। भुक्तपयु पितस्य दृष्टादिदोषोपहतत्वेन
नित्यभोजनविषयत्वात्। तेषामभ्युत्थानामेव श्राद्धेप्रयोगात्।
तथाभादित्ये। विविधम्पायसंदद्यात् कृत्याणिसुबहूनिच। लेह्यं
चोष्यं तथापेय मुष्णमेवफलंविना। वायौ। भक्ष्याण्येवकर-
म्भाश्च इष्टकाधृतपूरिकाः। कृशरामधुसर्पिश्च पयःपायसमेवच।
स्निग्धोष्णानिचयोदद्यात् दग्निष्टोमफलंलभेदिति। करम्भादधि-
सक्तवः। इष्टका, कासारखण्डाः। कृशरस्तिलकल्कयुक्तौदनः।
स्विष्टमिति सुशब्देननैर्मल्यं विविधत्वञ्च दर्शयति। तथायमः।
ततोविशदमन्नाद्यं भोजयेत्प्रयतोद्विजान्। अन्नंसूपंघृतंशाकं मां-
सन्दधिपयोमधु। धानाश्चमधुसंयुक्ता इक्षूंश्चैवसगोरसान्। शर्करां-
फलमूलञ्चसर्वन्दद्यादमत्सरीति। मनुरपि। भक्ष्यंभोज्यञ्चविविधं
मूलानिचफलानिच। हृद्यानिचैवमांसानि पानानिसुरभीणिच।
विविधमित्येकान्ननिषेधः। ततोन्नबहुसंस्कारं नैकव्यञ्जनभक्ष्य-
वत्। चोष्यपेयमसृद्धन्तु यथाशक्त्युपकल्पयेदितिवाक्यात्। अन्न-
मित्यादनीयम्। अन्नमितिचकसत्त्वावा स्यांचेतगतप्राक्तः सतुपं-
धान्यमुच्यते। आमान्नं सतुपंप्रोक्तंपक्वमन्नमुदाहृतमितिवाक्यात्।
तेनसंभवेसत्यामान्नादिक न्नदेयमित्यर्थः। दद्यादिति यथोक्त-
संकल्पवाक्य न्दर्शयति। चत्वे के। अर्घेचश्रोदकेचैवेति कात्या-
यनेनान्नदाने तन्कस्य दर्शित्वा दद्यात्पितपितामहप्रपितामहा-
मुकशर्माण इत्यादुच्चार्यतृतीयस्तृचीयांश सेभ्य स्वधेत्तिसं-
वेगाद्दद्यादित्ति। अन्येतन्न वासानेतत्तद्दत्युद्दिश्य भोजयेदि-
त्तिशांखायनोक्ते रमुकामुकगोत्रं तत्तुभ्यमन्नं स्वधानम इतिब्राह्मो-

त्तोश्च । पृथगुद्दिश्यदद्या च्चतस्येणेति । एवंसत्यस्मत्पितरमुकशर्म-न्नस्मत्पितामहाऽस्मत्प्रपितामहेत्यादि पृथक्पृथगुद्दिश्य वाक्यान्ते इदमन्नंसघृतादि वःस्वधानमइत्यत्र भयथा वाक्यमुचितमित्त्याभाति । तन्त्रपार्थक्ययोरुपदेशात् । अथच ब्राह्मणाविस्संपत्ता वैकैकस्यापितेत्रयः । एकोवैकस्यभोक्तव्य स्त्रयाणामेकएववेतिवाक्यात्पृथगुद्दिजपक्षेपृथगुपदेशः । त्रयाणामेकद्विजपक्षे तन्त्रेणेत्यविरोधः । यत्तु के इदमन्नंवःस्वधेतिसंकल्पे नममेतित्यागंनकुर्वन्ति तन्न । स्वसत्तानिवृत्तेरुक्तत्वात् । तथाऽत्रिः । हस्तेनमुक्तमन्नाद्यमिदमन्नमुदीरयेत् । स्वाहेतिचततःकुर्यात्स्वसत्ताविनिवर्त्तनं । सम्बन्धगोत्रनामानि इमन्नन्ततःस्वधा । पितृक्रमादुदीर्यते स्वसत्ताविनिवर्त्तयेत् । धर्मप्रदीपेपि । ततोन्नं पितृदेवेभ्यः संकल्प्यचयथाविधिः । दत्तंयद्दास्यमानंतत् आत्मनेनममेतिच । एतत्संकल्पोदकंहस्ते नदेयम् । तथाधर्मप्रदीपेपि । सिद्धान्नस्यतुसंकल्पो भूमावेवप्रदीयते । हस्तेपुदीयमानंच त्पितॄणांनोपतिष्ठते । भूमिर्जननी सर्वेषांभूतानांचविशेषतः । तत्रोपतिष्ठतेन्नं तु नचहस्ते-कदाचन । स्मृतिमंजरीकारोपि । दीपमन्नंचपिण्डञ्च भूमौदद्याद्विचक्षणः । पूर्वदानानिविप्राणां करेदद्याच्चदक्षिणे । तथा । तिलदर्भसमायुक्तं तोयंभूमौप्रदापयेत् । पात्रस्यसन्निधौपित्र्ये दैवेयवसमन्वितं । वैश्वदेवस्यवामोरु पितृपात्रस्यदक्षिणे । संकल्पोदकदानंश्राद्धनित्यश्राद्धं यथाविधीति । अकृतेनून संकल्पेनूनंद्विजानस्पृशेयु । पात्रस्यनोद्धरेयुः । तथाऽत्रिः । यसङ्कल्पितदनादास्याणिस्थांयदुपस्पृशेत् । अभोज्यंतद्भवेदत्तं पितॄणांनोपतिष्ठते । अकृतेत्वन्नसङ्कल्पेय पात्रस्योद्धरेद्विजः । वृथाश्राद्धमवाप्नोति दाताचनरकंव्रजेदिति । सङ्कल्पोत्तरमपोशाना त्प्रागंनंनरक्षीयात् । तथातत्रैव ।

तस्माच्च दुष्कलाद्वापि जायते । हत्वा जन्तून्भवेन्मांसं तस्मात्तत्परि-
वर्जयेत् । एकस्य च क्षणिकात्तृप्तिः रन्यः प्राणैर्वियुज्यते । अहो मांस-
स्य दौरात्म्यं प्रत्यक्षमिह दृश्यते । किञ्च । यूपं छित्वा पशुं हत्वा
कृत्वा रुधिरकर्दमं । यद्येवं गम्यते स्वर्गे नरकं केन गम्यत इत्यन्ये ।
कलिविषयो मांसनिषेधो विधिस्त्वन्यविषय इति । तथा अक्षतागो
पशुश्चैव श्राद्धे मांसं तथा मधु । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्ज-
येदित्यपरे । देशविषयो निषेध इत्यन्ये । तस्माच्छ्राद्धे मांसनिषेध-
इति । अत्रोच्यते । यदुक्तं मुन्यन्नं ब्राह्मणस्येति प्राधान्यान्मांसं
क्षत्रियविड्विषयं न ब्राह्मणस्येति । तन्न । मांसादुत्कर्षस्य भाव एव-
मुन्यन्नादिप्राधान्योपपत्तेः । तथा चात्रेयः । मुन्यन्नामिषमाध्वीकै-
र्विप्रक्षत्रियवैश्यजाः । श्राद्धं विदध्युरेतत्तु व्यत्यस्तमितरैः । मा-
ध्वीकं मधु । द्विजोत्तमविशां । जघन्यजाः शूद्राः मांसादिद्रव्ये-
ऽपि मुन्यन्नादिभिः क्रमाद्विप्रादयः श्राद्धं कुर्युः सति तु मांसादौ-
तेनेव । तथाह शातातपः । मुन्यन्नामिषमध्वाज्यैः स्वभावेनोक्त-
वस्तुनः । क्रमाद्विप्रादिभिर्वर्णैर्विधेयमिति शुभः । परमान्ने-
न मांसेन वा कैर्मधुघृतादिभिः । सर्ववर्णैः प्रकर्तव्यं श्राद्धं वैश्विसगां-
तः । एवमन्यदपि । मुन्यन्नैर्ब्राह्मणाः श्राद्धं मामिषैर्बाहुसम्भवाः
वैश्या मधुना कुर्युः शूद्रा मूलफलादिना । अत्र [illegible] मेतेन्दे-
वहिकेवलम् । सर्ववर्णैस्तु कर्तव्यं सामिषं सतिसम्भव इति । यच्चाप्युक्तं
प्राणिहिंसापूर्वक एव श्राद्धे मांसनिषेध इति । तदपि न । सामान्य-
हिंसाया अग्नीषोमीयपशुहिंसाविधिविहितहिंसया बाधोपप-
त्तेः । तथा जाबालिः । हिनस्ति यः पशून् यस्तु सुहृद्भिः स च पापभाक्
श्राद्धापदेशतो हिंसा मपि शास्त्रे न दुष्यति । स्कान्देऽपि । सर्वदेवपित्र-
नाहि यो हिनस्ति पशून् द्विजः । स यज्ञफलमाप्नोति ते च यान्ति परं-

स्मृतिम् । स्वार्थमन्नम्पचेद्यस्तु योऽहिनस्तितथापशून् । एकाकीमि-
ष्टमश्नाति वयस्तेयान्निरौरवम् । भीष्मोऽपि योऽहिंसकानिभूतानि
हिनस्त्यात्मसुखेच्छया । कृष्णद्वैपायनःप्राह स्वात्ररत्वंसगच्छति ।
वशिष्ठोऽपि । मधुपर्केच सोमेच दैवपित्र्यककर्मणि । अत्रैवपशवो
हिंस्या नान्यत्रेतिकथञ्चन तथा । यज्ञार्थम्पशवोऽवध्याः मुत्रार्थे-
परयोषितहत्यादिशास्त्रात् । यदपिकलिविषयोनिषेध इतितद-
पिन । कलिविषयविधायकवाक्यस्वबचनस्यबाधात् । तथाजा-
तूकर्ण्यः । मांसंयुगेषु सर्वेषु यज्ञश्राद्धेषमाहृतम् । श्राद्धोपयमनेय-
न्ने कलौतन्नविशिष्यते । सुमन्तुरपि । कृतकोऽपिश्रताविमाः कलौचे-
त्स्यान्निरामिषम् । तृप्तिंनेच्छन्तिपितरस्तस्यश्राद्धे कदाचन । पैठीन-
सिः । परमान्नं कालशाकं मधुमांसंघृतम्पयः सुगन्धान्निति स्याविप्रः
प्रकृत्याऽविरोधा । शस्तान्यष्टौतु सर्वेषांयुगेषुमुनिसत्तमाः । पितृ-
णांदेवतानाञ्च दुर्लभानिकलावपीति । निबन्धान्तरेचैतद्वाक्य
निर्मूलत्वमतिपत्तेश्च । तथा । गोमेधोनरमेधश्च पललतागोपशुस्तथा ।
देवराच्चसुतोत्पत्तिः कलौपञ्चविवर्जयेत्इति पराशरोक्तेः । यत्तु
देशविषयोनिषेध इतितदपिन । मध्यदेशादौ शिष्टालुतया ऽवि-
च्छिन्न मांसभक्षणोपलब्धेः । नचदेशविषयः शक्यतेवक्तुं । देशभेद
विषयस्यनिरासात् । तथा वृद्धप्रचेताः । नयुगानांनदेशानां
नविप्राणांद्विजोत्तमाः धर्मशास्त्रेषुभेदो दृश्यतेमांसभक्षणे । देश-
देशभेदे श्राद्धे दृश्यमानत्वाच्च । तस्माद्विहित हिंसादौ श्राद्धादि-
कर्मसुच मांसभक्षणविधिर्नतरत्वे लिखित । तथामनुः । प्रोक्षित-
म्भक्षयेन्मांसं ब्राह्मणस्य च काम्यया । यथाविधिनियुक्तस्यप्राणाना-
मेवचात्यये । याज्ञवल्क्योऽपि । प्राणात्यये तथाश्राद्धे प्रोक्षितन्द्वि-
जकाम्ययेति । भक्ष्यच्छागादिविहितमांसं । देवलः । पञ्चपञ्च-

या। अल्पदोषमितिज्ञेयम् विपरीतेतुलिप्यत इति महाभारत-वाक्यम्। तदेवविधिनाकुर्यात् स्वर्गप्राप्तिमानव इत्यपि तत्र। इतियत्प्रोक्षितमाल्यैः प्रोक्षितामुाक्षितम्भुवि। वेदोक्तेनप्रकारेण पितृणाम्प्रक्रियासुच। पितृदेवतयज्ञेषु प्रोक्षितंहविरुच्यते। वि-धिनावेदद्दष्टेन तद्भक्षान्येनदुष्यतीति यमवाक्यं। सर्वेषामेवमां-सानां महान्दोषास्तुभक्षणे। निःवत्तेमहापुण्य मितिमाहप्रजा-पतिरिति। यत्पमारतवाक्यम् भक्षणेनमहान् दोषोनिवृत्त्या-पुण्यमुच्यतइति तदुभयमपिग्राहादे रत्यवजिह्वालतया भक्षण-विषयं। तथास्कन्दपुराणे। यत्रयत्रनिषेधोहिश्रूयते मांसभक्षणे। जिह्वालानप्रतिसज्ञेयो नतु क्रविधिनाहतां। तथा। प्रयान्तिन-रकंघोरं मांसमश्नन्ति येनराः जिह्वालान्तातिदोषोयं नदोषोवि-धिनाश्नतामिति। यच्चवृहस्पतिवाक्यम्। रोगार्त्तोभ्यर्थितो-वापि मांसंनाश्नन्त्यलोलुपः। फलम्प्राप्नोत्ययत्नेन सोश्वमेधफल-स्यचेति तद्वाह्मब्रह्मचारिविषयम्। तथामनुः। व्रतवद्देवदैवत्ये पित्र्येकर्मण्यथर्षिवत्। प्रकाममर्थितोश्नीया व्रतमस्यनलुप्यत इत्ये-कमभिधायांव्रतवद्दृषिवदृर्शनस्यविधानात्। अलोलुप इत्यनेन तद्विषयावगमाच्च तथा। सतपति तयोजस्रम यजतेच ददाति-च। मधुमांसनिवृत्तोयः प्रोवाचेदंवृहस्पतिः। जैमिनिरपि। ब्रह्म-चर्यमुपास्यैतत्कृत्वादारसङ्ग्रहम्। सन्यसेन्नाधिकारस्या मांसेवि-धिवदन्यतइति। अन्यतइति दारसंग्रहादूर्द्ध्वम् विधिवन्मांसभक्ष-णाधिकारइत्यर्थः। तथामनुः। नमांसभक्षणे दोषोनमद्ये नचमै-थुने। प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहाफलेति। मांसमद्यमैथुनेषु विहितेषु भक्ष्यभोज्यान्नपानाभिगमने भूतप्रवृत्तित्वान्नदोषः। निवृत्तिस्तुमहाफलप्रापिकेत्यर्थः। महतीचपापफलाचेतिव्यत-

त्ते.। न त्ववंच्युत्यित्ति नेत्राधुः। फलाफलशब्दयोः पर्यायोभवतापि मत्स्यच्छ्न्नस्याकारादेश्च वक्ष्यमाणत्वात्। तथाटहस्पतिः। अभक्ष्यांसपुरोडाशे भक्षणं मृगपक्षिणाम्। पुराणेष्वेवयज्ञेषु ब्रह्मक्षत्रसवेषु च। सौत्रामण्यांतथामद्यं श्रुतौभक्षमुदाहृतम्। ऋतौचमैथुनंधर्म्मं पुत्रोत्पत्तिनिमित्ततः। स्वर्गंप्राप्नोतिनेत्रंतु प्रत्यवायेनयुज्यतइति। तस्मात्सोक्षितादिचतुर्षु स्मृत्युक्तसंकल्पेन मांसत्यागिनामपि गृहस्थानाम् भक्ष्यमेवमांसमितिनदोषः। अविहितसंकल्पेन तत्यागिनान्तु पत्न्यादिभक्षणं ष्वदोषः। रोगार्तानामभ्यर्थितानांच ब्रह्मचारिणाम् श्राद्धादिष्वविभक्षणे महान्दोषएवेति। अतस्त्यक्तनांसादेरपि श्राद्धेभक्षणमेवोचितमित्युक्तम्। तथाचोशना। नियुक्तश्चेत् यःश्राद्धे यतिःक्षुत्परिवर्जयेत्। पितरस्तस्य तन्मासम् नैराश्यंप्रतिपेदिरे। देवलोपि। नियुक्तस्तु द्विश्राद्धे दैवेमांसंसमुत्सृजेत्। यावतिपशुरोमाणि तावन्निरयमृच्छति। स्कंदेखरसंवादेपि। निवेशितस्तु यःश्राद्धे यज्ञेवापिद्विजाधमः। मांसंनात्ति निरयम्। यातिवैभशतान् नरकगतरत्न स्वहुना॥ एवमन्नंसंकल्प्यापोशनम् दत्वोंकारव्याहृतिपूर्वंगायत्र्यादि जपेत्। तथाच याज्ञवल्क्य। सव्याहृतिकांगायत्रीं मधुवाताइतितृचम्। जप्त्वायथासुखंवाच्यं भुंजीरंस्तेपि वाग्यताः केचित्तुमधुमक्षितिविजर्पवारिधारांचनकुर्वंति। तन्न। उभयोरपिविधानात्। तथाचप्रचेताः। आपोशानंमदत्वायथसारिवीं तिजपेद्य। मधुव्याताइत्त्तृवम्मक्षित्येतत्त्रिकन्तथा। स्कांदेपि। आपोशानमथोदत्वा वारिधारांक्षिपेद्भुवः। नमोदेवे भ्यइतिचसव्येनोदङ्मुखोद्विजः। अपसव्यम्पितृभ्यस्तुइत धारांवदेत्स्वधामिति। एवंकृत्वाऽक्षिद्रीकरणं कृत्वायेदेवासः येचेहेत्यादिपठित्वा यथासुखमश्नतं जुद-

ध्वमित्युक्ताभोजयेत् । तथाचयमः । अन्नहीनंक्रियाहीनं मंत्रहीनंचयद्भवेत् । सर्वमच्छिद्रमित्युक्त्वाततोयत्नेनभोजयेत् । कात्यायनः । येदेवासइत्येचेहमन्त्रद्वयमुदीरयेत् । मन्त्रान्तेहुततोब्रूयादमृतं भुज्यतामिति । पूर्वेदैवे उत्तरत्रापित्र्ये इतिविवेकः । इदयास्यरक्षोपि । यथासुखंजुषध्वंभोइति वाच्यमनिष्ठुरमिति । अत्रबलिदानमित्येके । नेत्यन्ये । एवंचवैश्वदेवेबलिः पित्र्येत्वविरोधः । तथाच । स्पर्शनान्तेस्थितेदन्नं स्वल्पमात्रंबलिंहरेत् । होमस्तुमधुवातेति होमांस्तउदगांपिवेदिति वैश्वदेवविषयम् । अपि च ॥ दत्तेवाप्यथवाऽदत्ते भूमौयोनिक्षिपेद्बलिं तदेतन्निष्फलंयाति निराशैःपितृभिर्गतैरिति पित्र्यविषयम् । पितॄणामन्नमुत्सृष्टे बलिंकुर्वन्तियेद्विजाः । आसुरंतद्भवेच्छ्राद्धम् पितॄणांनोपतिष्ठत इतिनिषेधात् ॥

मू० अश्नत्सुजपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा रक्षोघ्नीःपित्र्यमंत्रान्पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणि ॥७॥

सप्रणवांव्याहृतिपूर्वां गायत्रीमित्यन्वयः । पाठोऽयंनयाय्यते । वाशब्दस्तुविकल्पार्थः । अशनात्पूर्वंत्रिरशनेऽपि च सकृदितिव्यवस्थार्थोवा । पूर्वस्याऽदृष्टोपदृष्टत्वात् । तथाचमर्चताः । आपोशानमथोदत्त्वासावित्रींत्रिर्जपेदथ । मधुवाताइति त्र्यचं मध्वित्येतत्त्रिकंतथेति । चलदुलायुध; सकृत्त्रिर्वाऽथमधुमतीर्मधुमध्वितिचेति पाठइति तत्कर्कादिभिरनादृतत्वात्कल्पस्याशनात्पूर्वं विधानाच्च चिन्त्यम् । रक्षांसिघ्नन्तीति रक्षोघ्नीर्मूलविभुजा-

स्यमाशिष.प्रार्थनन्तथा विप्रदक्षिणाञ्चैव स्वस्तिवाचनकं विना पि-
त्र्यमन्त्यकर्तव्यम्प्राचीनावीतिनासदेति अत्र यद्यप्यन्नतिस्वस्तिसागा
न्येनोक्तंतथापि यथोपदेशं भोक्तव्यं तथाचप्रचेता:पीत्वापोशानमश्नी
यात्पात्रे दत्तमगर्हितं सर्वेन्द्रियाणां चापल्यं नकुर्यात्पाणिपादयो:
बौधायन:पादेनपादमाक्रम्ययोभुंक्तेनापदिद्विज: नैवासौभुञ्जतेश्राद्धं
निराशा:पितरोगता: प्रचेता: भोजनन्तुन नि:शेषङ्कुर्यात् प्राज्ञ:
कथञ्चन अन्यत्रदध्न: क्षीराद्वा क्षौद्रात्सक्तुभ्यएवच शेषत्यागस्यनित्य
त्वात् तथाच जमदग्नि: भुक्त्वापीत्वातुय:कश्चिद्रिक्तम्पात्रं समुत्सृजेत्
सनर:क्षुत्पिपासार्त:भवेज्जन्मनिजन्मनि नानिन्द्येषु नावशेषेषु रिति
तु:अधिकोच्छिष्टयागविषयं ततोत्तेयासमावन्तु योविप्रोनत्यजेत्स-
दा यज्ञ.हविरुच्छिष्टदानादौ सह रक्षांसिभुंजते इतिवाक्यात् मनु: प
त्यक्तं सर्वमन्नं स्यादश्नीयुस्तेचवाग्यता:नच द्विजातयोब्रूयुर्दातृपृ-
ष्टाहविर्गुणान् वाग्यता इत्याकैराकथन प्राप्तेनब्रूयुरिति हस्तसं-
ज्ञयाप्यकथनार्थं एकारेणापिनोब्रूयाडस्तेनापि गुणागुणदेरितिश-
ङ्केनप्रतिषेधात् आचारमात्रविरुद्धं यत् निषिद्धं तु तथाश्राद्धेव-
क्ष्य गोभनं इविरितिवाक्यात् भोक्तृणांनिषेधाभावात् हवि:प्रशं-
सनीयमित्यभ्युत्पादनार्थं भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणा-
न्छनै: पृथक्पृथक्रसवेदाकुर्यादेव:परोचनामिति अश्नीरंश्चैवे-
त्येवकार:परस्परस्पर्शस्यदोषत्वसूचक तथाचसंवर्त:श्राद्धेपंक्तिषुभुं-
जानोब्राह्मणोब्राह्मणंस्पृशेत् तदन्नमत्तजन्तुं भुक्त्वागायत्र्यष्टशतं-
जपेत् कात्यायनोपि एकपङ्क्तौ तुयोविप्रोविप्रं स्पृशेद्यदि तदन्न-
मत्यजेद्भुक्त्वागायत्र्यष्टशतंजपेत् हारीत:पात्रेपात्रं प्रतिष्ठाप्य येऽ
ज्ञानाद्भुंजतेद्विजा:आसुरंतन्नवेक्षणम् पितृणांनोपतिष्ठते मार्कं-
डेय. कटिभुग्नस्तुयोभुंक्तेनतजानुकरस्तथा हसतेवदतेचैव निरा

त्वाव्यमारिण ममुत्सृजेद्भक्षतामयतोविकरन्भुवि सार्वयर्णिकं सर्वत्र्यंजनसहितम् असंस्कृतभागत्वाद्विकरेदथौदनमेवेतिकश्चित्तन्न यदन्नंपिण्डदानेपुतदन्नं विकरेव्यसेदिति इत्याद्यवचनोक्तेः अन्नमेवान्नंनविकरेदितित्वपास् इत्येषयुक्तम् प्राक्स्वाद्दत्तांस्ततो विप्राश्नकुर्याद्विकिरासनमिति त्वन्निद्दानं चान्नादिग्रहणे नाद्दारानुमानेनचप्रतिपद्नम् एतयद्व्यवधार्यैव्युक्तमयाविप्रादेश्वपरिमाणंस्मृत्व तरादोव्यं तथाद्वयाज्ञवल्क्यः विकिरंभुविदातव्यमुच्छिष्टेभ्यःपडगुलम् पठंतिच उच्छिष्टस्योत्तरे देशेपिण्डान्दद्यात्पडङ्गुलमिति यत्तुपुराणसमुच्चये विश्वेदेवपितॄणांच अंतरेतुनिपेत्कुशान् तत्रावकिरणं कुर्याद्गाथामेतामुदीरयेत् यच्च तत्रामंविकरन्तराद्देवपित्रांतरेभुवीतिद्विजाग्र्यानवेधकमित्याविरोधः भुक्तवतामग्रतइति योगीश्वरोक्तेः नन्वन्नविकिरं मंत्रकरणादिकीर्येतिवाच्यंनप्रकीर्येति उच्यते विकिरंविनाश्राद्धंव्यर्थमितिपृ श्रद्धेनश्रोतितमित्यदोषः तथाचगोभिलः विकरेणविनाश्राद्धम् निष्फलंपरिकीर्तितम् एकोद्दिष्टे विशेषेणप्रेतश्राद्धे विशेषतः यदिति योमोहात्कुरुतेश्राद्धम् विकिरेणविनाक्वचित् तत्सर्वंव्यर्थतांयाति मिष्टपिण्डोदकादिकमिति अत्रसंशयः किमपिण्डश्राद्धे विकरःस्यान्नवेति उभयथाप्यदृष्टेः तथाहि पिण्डनिर्वापरहितंयत्रश्राद्धं विधीयते स्वधावाचनलोपोस्तिविकरस्तुनलुप्यते तथा नचाग्नौकरणं कुर्यान्नार्घदानंकथंचन नपिण्डकल्पनाश्राद्धे विकिरान्नं नचोत्सृजेदिति उभयशास्त्रत्वाद्विकल्पइत्यन्ये यत्रपिण्डदानानिषेधकवचंद्दि गकालादार्सभवेनपिंडनर्जे करोतितदाविकिरःस्यान्नतुयुगादगादिषुपिण्डदाननिषेधेपीत्यन्ये तद्विचार्यंद्धिविकरःप्रधानमन्यादिप्रधानतदापिण्डप्राधान्ये

विरोधः अथाङ्गन्तच्चाङ्गानां प्रधानानुरोधात्पिण्डाभावेतदभावइत्यनाश्चर्यं विकल्पनस्तुनविषयकल्पनेः तदुक्तं स्मृतिद्वैधेतुविषयः पृथक्पृथगिति तस्मात्देशाद्यसम्भवेपिण्डाभावेपिविकिरेतपिण्डनिषेधेपीतिसुस्थं तथामोक्षेश्वरनिबन्धे मघायुगादिभरणी ग्रहे पिण्डंविवर्जयेत् अग्नेजनपूजान्तमुल्मुकास्तरणानिच निःशेषमग्नौकरणम्विकिरञ्चपडंगुलमिति तस्माद्युगादिषुपिण्डनिषेधे आवाहनाग्नौकरणविकिरवेदादि पूजान्तस्वधावाक्यादीनांनिषेधः सिद्धः विकीर्याचमेत् तथाचमरीचिः श्राद्धे पुविकिरन्दत्त्वायोनाचामतिविभ्रमात् पितरस्तस्यपश्यासम्भवन्त्युच्छिष्टभोजनइति । तथा विकिरेपिण्डदानेच तर्पणेभोजनेतथा वृत्तेयाचमनंप्रोक्तम् दर्भत्यागोविधीयते अत्रानग्निदग्धाइत्ययंपाठः येषांदाहोनक्रियतेयेग्निदग्धास्तथापरइतिब्राह्मणवाक्यात् ॥

## मू० सकृत्सकृदपोदत्वापूर्ववद्गायत्रीञ्जपित्वामधुमतीर्मधुमध्विति च ॥ ९ ॥

विप्रेभ्यश्चुलु कार्थसकृत्सकृदपोदत्वा पूर्ववत्सप्रणवव्याहृतिगायत्रींसकृत्त्रिर्वामधुमतीर्मधुमध्विति जपेदित्यर्थः तथाच मार्कण्डेयः ततस्त्वाचमनार्थाय दद्याच्चापःसकृत्सकृदिति बौत्सापिश्च दैवद्विजार्थी अपोदत्वागायत्र्यादि जपदर्शितकश्च तथाचगोभिलसूत्रम् अङ्गुष्ठमन्ने विधाय सकृत्सकृदपोदद्यादिति मधुमन्त्रौवै यामुतामधुमत्यो मधुवातादृत्यादित्र्चः मधुमध्विति द्विरुच्चारणं मन्त्रप्रदर्शनार्थम् संहितायांमधुमधुमध्वितिप्रवर्षमन्त्रदृष्टेः देवपूर्वमद्दानमित्यके तन्नपितृपूर्वविधेः तथाचविष्णुः उदङ्मुखेष्वाचमनमादौ ततःप्राङ्मुखेषु दद्यादिति त्रिसर्गश्चुलुकस्याग्नौ करणम्पङ्क्तिपावनम् करशुद्धिरपोशानं पित्र्यपूर्वाणिषट्सदेत्युक्तम् ॥

## मू० तृप्ताःस्थेतिपृच्छति ॥ १० ॥

अनन्तरन्तृप्ताःस्थेतिब्राह्मणानपृच्छेदित्यर्थः अत्रपङ्क्तिमूर्द्धन्यमेतत्तृप्ताःस्थेति वहुवचनम्पूजार्थमित्येके तन्न प्रतिवचनेबहुवचनानुपपत्तेः नचाग्नौकरणादिष्विवात्रैकस्यप्रश्ने दृष्टार्थत्वं तस्मात्पङ्क्तिमूर्द्धन्यंपृच्छति सर्वान्वेत्यनव्यवस्थित विकल्पइत्युक्तं । अतः सर्वेप्रष्टव्याइति तथाचयमः यथाब्रूयुस्तथाकुर्यादनुज्ञातस्तुतैर्द्विजैरिति ननुभोक्तृविप्राणां वमनेकिंश्राद्धम् समापनीयम नवा नवसमापनीयमित्येके तन्न स्मृतिविरोधात् तथाच हेमाद्रिकाण्वे अकृतेपिण्डदानेतु ब्राह्मणोवमतेयदि पुनःपाकंप्रकुर्वीत श्राद्धं कुर्याद्यथाविधिः धर्मप्रदीपेपि अकृतेपिण्डदानेतु भुंजानोब्राह्मणोवमेत् पाकंकृत्वापुनःश्राद्धं कर्त्तव्यन्तुयथाविधीति अकृतइत्यु पादाना त्कृतिसमापनमितिचेन्न वमनस्यश्राद्धविघातकत्वात् अतोत्तरेद्यु रेवपुनःश्राद्धमितिसिद्धम् तथाचस्मृतिः वमनेवाविरेकेवा वांतह्निनंवर्जयेदिति नचैतन्निमन्त्रणोत्तरंश्राद्धात्प्राक्तनवमनविषयं श्राद्धविघ्नेसमुत्पन्नेअन्तरामृतसूतके वदन्तिशुद्धेतत्कार्यं दर्शेवापिनिचक्षणइत्यु त्तरेद्युर्विधानात् अत्रप्रायश्चित्तमित्येके पठन्तिच पितृद्विजानांमध्येतुपितु र्वमनंयदि तद्दिने चोपवासश्चपुनःश्राद्धं परेह्नि सर्वमन्नंसमादायमन्त्रैःप्राणादि पञ्चकैः द्वात्रिंशदाहुतीर्हुत्वाशेषंकर्मसमाचरेदिति ।

## * तृप्ताःस्मइत्यनुज्ञातःशेषमन्नमनुज्ञाप्य ॥११॥

ततस्तृप्ताःस्मेतिद्विजैरुक्तेशेषमन्नं किंक्रियतामिति भोक्तृनपृच्छाइष्टैः सहभुज्यतामित्यनुज्ञापयेदित्यर्थः । एतदपि सर्वापेक्षं नपङ्क्तिमूर्द्धन्यस्यैव ननु श्राद्धावशिष्टपाकेएवशेषशब्दोनतुपाकान्त-

रेतत्कथम्पाकान्तरभुजितद्दानञ्चेतिचेन्न गृहसिद्धस्य सर्वस्यापि पितृशेषत्वेन दानभुज्युपपत्तेः । तथा च यमः भक्ष्यम्भोज्यन्तथापेयं यत्किञ्चित्पच्यते गृहे नभोक्तव्यम्पितॄणां तदनिवेद्य कथञ्चनेति अतः शेषस्यापि पित्रुद्देशेन दानमित्युक्तं ननु किं निरग्नेरुल्मुकनिधानं स्यान्नवा उल्मुकस्य दक्षिणाग्निसाध्यत्वात्तदभावे तन्नेत्येके स्मार्ताग्नेः पिण्डपितृयज्ञविधानान्ननिरग्नेरित्यन्ये न देवताग्निशब्दक्रियाः । परार्थत्वादितिपरिभाषातो निषेधादग्न्यंतरेण नस्यादित्यपरे निरग्नेरपिश्राद्धाधिकारान्निषादस्थपतीष्टिवल्लौकिकाग्निनेति केचित् एवं सत्युल्मुकनिधानमनियतमिति उच्यते यदुक्तं दक्षिणाग्न्यभावे तन्नेति नतत् पिण्डपितृयज्ञवदित्यनेन स्मार्ताग्नेः प्राप्तत्वात् यच्चपिण्डपितृयज्ञस्य विधेर्निरग्नेर्नेति तदपि न प्रकरणे पृथगायस्मृतेर्नित्यत्वं यत्तु नदेवतेत्यादिनाऽग्नेः प्रतिनिध्यभाव इति तदपि पिण्डपितृयज्ञवदित्यतिदेशात् लौकिकाग्न्युपादान वैयर्थ्यं स्यात् यच्च निषादस्थपतीष्टिवद्विरोध इति तदपि न नित्यत्वानुपलब्धेः तस्माद्गुणफलविधेरुल्मुकाधानं साग्निनिरग्न्योर्नित्यमिति सिद्धम् । तथा च ब्रह्मयाज्ञवल्क्यः । पितृरूपास्त्वसुराः पिशाचा राक्षसाश्च ये तेषां वै रक्षणार्थाय क्षिपेदग्निं तु नैर्ऋते मण्डलेष्वग्निदाहं ये न कुर्वन्ति द्विजोत्तमाः निराशाः पितरस्तेषां पैशाचं श्राद्धमुच्यते स्कान्देऽपि येरूपाणीति मन्त्रेण न्यसेदुल्मुकमन्तिके शुष्कगोमयसंभूतं यावच्छ्राद्धं समाप्यते अजीर्णदोषनाशाय पितॄणामग्निवर्द्धनं श्रुतिरपि स यदि निधायोल्मुकमथ तत्पितृभ्यो दद्यादिति ॥

**मू० सर्वमन्नमेकतोऽद्धृत्योच्छिष्ट समीपे-दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यात् ॥ १२ ॥**

एकतोऽद्धृत्येति छान्दसः सन्धिः सर्वशब्दः सूपाद्यपेक्षीनयाव-

दाचक: उच्छिष्टसमीपइति सद्देशोपलक्षणं तथाचस्मृतिः पितृणा-
मासनस्थाना इमतलिखरशिनपु उच्छिष्टसन्निधानन्तन्नोच्छि-
ष्टासनसंनिधौ व्यानोपि परश्रिमाचमुत्सृज्यपिण्डांस्तत्रप्रदापयेत्।
यत्नोपम्पृगतांवापि प्राप्नुयन्निनविन्दवइति यथायोग्यं विकल्पोत्र-
विकिरपिण्डविषयथा सनस्थानादुच्छिष्टन्ततो विकिरस्तत.पिण्डा
वाविरलिख्यस्थावा व्याममात्रं समुत्सृज्य पिण्डांस्तत्रप्रदापयेदिति
जातूकर्णोक्तेः पीयामातामहविषया अवनेज्येतिस्वार्थेयिच् द-
द्यादिति गोत्रादिप्रकाशकन्ततश्च सर्वान्नमेकपात्रे उधृत्यपत्न्या
पिण्डान्कारयित्वा यथोक्तदेशेवेद्यादिकृत्वा पृथक्पृथगवनिज्यद-
र्भेपुयथोपदेशंपिण्डान् दद्यादित्यर्थः तथाच स्कंदे अपसव्यं वाम-
जानु पातपूर्वंपडानन मन्त्रोपिण्डांस्तुमृद्नीयाविभ्रगंस्तसवायि-
नौति यद्यप्यवसामान्ये नसर्वं मन्नमित्युक्तन्तथापि निर्मायंवोध्यं
तथाच हृदशातातः मायान्सर्वंवनैवेदीपिण्डेम्गौचधिवर्जयेत्
यथामदंतथामाया निविद्दायाग्निपिण्डयोरिति अवसंग्रथः
पिण्डपितृशब्द दित्यनेनप्राप्ते पु द.ावनेजनपिण्डेपुपुन स्तदुप-
कणं कृतइति तथाच पिण्डपितृयज्ञमूलम् तदक्षिणेनाग्निरुपस्य-
पर्ष्ठतात्सपरेगोलमुकम् पुरस्तात्करोति येरूपायोलुदपात्रे णा-
वनेजयत्यसव्यएनम्नेनवोदरसामर्थ्यां दक्षावनेनिदवेतियज-
मानस्पितृप्रसिद्धोनुपमलएसदा च्छिन्नानि लेपादाङ्कत्वा
यथावनिक्तम् पिण्डानदद्यात्सायेतत्र इत्यादि एवंके पिण्ड-
यज्ञेलेपामानिजा दर्भेपुपिण्डदान निञ्जदर्भेष्वे वावनेजन मि-
त्येतदर्थमिति । तथाच अप.चिपेन्मूलदेशे वनेनिगवेतियावत:
द्वितीयंचतृतीयंच मध्यदेशाग्रदेशयोरिति उपलक्षणपरमित्यन्ये
उपलक्षणे उपदशाकरणानुपपत्तिः परिसंख्यानेवावनेजादर्भेपु द-

स्तुभवेद्दर्भ इतिप्रागुक्तम् यत्तु शतपथे सकृदाच्छिन्नान्युपमूलदि
नानीत्युक्तम् तदपिसाग्निपरमेव सुमंतुरपि असाववनेनिक्ष्वेति-
पुरुषंपुरुषंप्रति त्रिस्त्रिरेकेनहस्तेन विद्धौतावनेजनम् अपसव्ये-
नहस्तेन निर्वपेदुदकंसुधीतिमनूक्तेश्च तथा श्राद्धेपिण्डेविवोद्देपु
दानेचैकेनदीयते तर्पणेतूभयेनैव जलन्देयन्तुनान्यथेति धर्मप्रदीपे-
पि गयायांदशपिण्डेच पिण्डशब्दोभिधीयते अत्यचलनशब्दःस्या-
दुगंगादिषुसरित्सुच महालयादिसमुच्चायकश्च । तथाचहेमाद्रौ
महालयेगयाश्राद्धे प्रेतश्राद्धे दशाहिके पिण्डशब्दप्रयोग,स्या दन्न-
मन्यत्रकीर्तयेदिति असावेतत्तइतिश्रुत्या सूयजतावेतत्तइत्युक्त्वा-
शाजसनेयिनाम् पिण्डेपुल्लोत्रप्रयोगः सर्वत्रत्यक्ते पिण्डशब्ददर्शना-
देतेपिण्डःस्वधेति सर्वत्रशाच्यमित्यन्ये तद्वयमपिविषयादर्शन-
निमित्तमितिबोध्यम् तस्मादिष्टिते पिण्डशब्दस्तद्भिन्ने ऽन्नशब्द-
इतिसिद्धम् यदिस्मृतिविरोधभियेतस्मिन्विषये विचिकित्सातर्ह्य
तत्ते पिण्डान्नंस्वधेत्यस्तु तथाचश्राद्धकल्पलतायां एतत्तेपिण्डा-
न्नमित्यत्रंबहृना एतत्पिण्डदानमेकश्वासेनकार्यं यावदेवोच्चरे
त्तत्स्तावत्प्राणन्निरोधयेदित्युक्तः नतुकिंपिण्डपंक्तयः प्रागप
क्रमाः प्रत्यगुपक्रमावा तत्रपश्चाद्धादागेतुमावादिवर्गार्थमित्यादस्तं-
बगृह्यात् दक्षिणस्यपिण्डादुपश्चिमास्युरिति भाष्यार्थसंग्रहकाव्या
त्पश्चिमसंस्थाइति तथा पिण्डात्पश्चिमेन तत्पत्नीनाम् किञ्चि-
दन्तर्धायेति शांखायनगृह्यादपीति पित्र्यकर्मत्वात् त्पत्नीनांप्राक्-
संस्थत्वानुपपत्ते. प्रत्यक्संस्थानेवेत्यन्ये उच्यते यदुक्तंप्रागुपक्रमा-
इति नवतथासति पित्र्यकर्मणि प्रदक्षिणोपचार स्यात् । पितॄ-
णामप्रदक्षिणमित्यादि वाक्यवैयर्थ्यापत्तेश्च द्वितीयेपिसएवदोष,
नचेवमिष्ट प्रत्यगुपक्रमाःप्रागपवर्गाः पितामहाणांसंस्थाभवन्ति

दक्षिणादिगुपक्रमादुदगन्ता एव वा वैश्वदेवद्विजसंस्था भवन्तीति निर्धारणेन ब्राह्मणोपवेशस्थ्रस्रापंक्तीनामपि तथैव स्थापितत्वात् अन्यथा वैषम्येणुक्रमोपपत्ते, सदाचारादपि प्राक्संस्थैवेति यत्वा- पस्तंबादिगृह्यद्वयम् यच्चाग्नेर्दक्षिणादेशेतुस्थानं कुर्वीत सैकतं मंड लं चतुरस्रं वा दक्षिणावनतं तथा तत्रस्थानेतु तीर्दर्भानेकमूलान्वि- तान्वहन् दक्षिणाग्रानुदक्संस्थान्द्विधा तांस्तृणु यात्तत्र पूर्वभा- गस्थदर्भेषु पितृपिण्डान्विनिक्षिपेत् । पश्चात्स्तृतेषुदर्भेषु मातृपि- ण्डान्विचक्षणाद्इति हेमाद्रिशिष्टवाक्यम् । तत्सन्धाविनामेवेत्यविरोधः अथ किंपिण्डप्रमाणं नियतम् नवा तत्र कपित्थबिल्वमात्रांश्च दद्या- दामलकैः समान् कुक्कुटाण्डप्रमाणान्वा बदरेणसमानथ नालिकेर- समान्वापि अधिकान्नप्रदापयेत् प्रमाणमेतत्पिण्डाना मंगि- रासुनिरब्रवीदित्यनेन विकल्पादनियतमिति चेन्न तत्र पश्यवाक्यस्य आवनिर्णेयविषयत्वेन व्यवस्थितेः तथा च मरीचिः आर्द्रामलकमा- त्रांस्तु पिण्डान्कुर्वीत पार्वणे एकोद्दिष्टे बिल्वमात्रम् पिण्डमेकं- स्तु निर्वपेत् नवश्राद्धे स्थूलतरम् तस्मादपि च निर्वपेत् तस्मादपि स्थू- लतरमाशौचे प्रतिवासरमिति अर्वकेपिण्डदानं केवलपिण्डैरेव नस्तुन्नकुशैरिति तन्न अंशभागिपत्नीनां कुशैरेवश्वशुरांतर्धानो- पपत्तेः तथा । श्वशुरस्यायतोयस्याः क्रियतेः प्रच्छादनक्रिया पुत्रैर्द- र्भेणसाकार्या मातुरश्वशुरस्याथिभिरिति मात्स्येपि ततः कृत्वांतरे- ददाति पत्नीभ्यः कुशान्कुशानुपर्दाति ।

## मू० आचांतेष्वित्राके ॥ १३ ॥

एकस्मिन् दिने स्वस्वशाखोक्तविज्ञापनार्थं मुनिभिर्भिन्नकालेषु पिण्डदानेष्वयनस्मृतम् तत्स्वशाखागतं यत्तत्तत्कुर्याद्विचक्षण-

इति शाखान्तरात् संग्रहकारोऽपि यान्यनेकालभेदेन कर्माणि समुन्नयोजनुः स्वसगृह्यानुसारेण विकल्पतेषुज्यत इति ततएवाचार्योक्तिपुदि-षेषु पिण्डदानमिषे कोजग नैकार्थायनइत्यर्थः विकल्पएवायमिति कर्कादयः ननु किं लेपभुजान्दर्भमूलेषुदर्भाग्रेषु वा दानमिति दर्भमूले लेपभुजः प्रीणयेत्प्रपर्पीयेरित्यादिवाक्यान्मूलेष्विति केतन्न लेपभाजश्चतुर्थाद्या इतिमात्स्यवाक्ये न चतुर्थपुरुषादीनां लेपभागित्वेन दर्भमूलेषैपर्यायपत्ते. मार्कण्डेयोऽपि लेपसम्बन्धिनश्चान्येऽपि तामहपितामहादिति नन्वेवन्दर्भमूले लेपभुजइत्यर्थक मितिचेन्न तस्य करघर्षणविषयत्वात् तथाच विष्णुः दर्भमूलेषु करावघर्षणमिति अतोदर्भाग्रेषु लेपभुजां दर्भमूले करप्रोञ्छनमित्यविरोधः तथा च स्मृत्यन्तरः दत्त्वा पिण्डें ततो हस्तं निर्मृज्याल्लेपभागिनां कुशाग्रे सम्प्रदातव्यं प्रीणन्तां लेपभागिन इति तथा उत्तरे कुशमूलन्तु पितृमूलन्तु दक्षिणे कुशमूलेषु योदद्यान्निराशाः पितरो गताः स्ववाति लेपभागिभ्यः पिण्डानामग्रतः सदा प्रपितामहेच यो दद्यात्तृप्तिः पञ्चदशाब्दिकीति ।

## मू० आचान्तेषूदकम्पुष्पाण्यक्षता नक्षय्योदकञ्च दद्यात् ॥ १४ ॥

(१) शाखान्तरोक्तमन्त्रैरुदकादि दानार्थेन तत्पुराणे । अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितं ब्राह्मणस्य करेन्यस्ताः शिवा आपो भवन्तु मे इत्युदकदाने लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मेइति पुष्पादिदाने अक्षतञ्चास्तु मे पुण्यं शान्तिपुष्टिर्धृतिस्तु मे यच्छ्रेयस्कारं लोके तदस्तु स-

(१) ब्राह्मणेषु कृताचमनेषु स्वसुखेभ्य उदकादिकं दद्यात् पुष्पाणि चात्र प्रतिषिद्धानि । पद्मं गन्धफलमप्रिनकायूथिका अन्यत्र सम्यका द्यानि गन्धरूपसमन्वितान्यपि दद्यात् ॥

दाममेत्यत्र तद्दाने एतद्यज्ञोपवीतिना कार्यं आशीरूपत्वात् तासु-
प्रोक्षितादियत्कर्म तत्कर्तव्यं यवादिना सव्येनेत्यर्थः । तथा विसर्जनं
सौमनस्यमाशिषः प्रार्थनं विना पित्र्यमन्यत्कर्तव्यम्प्राचीनावीति-
नासदेत्युक्तं अनाचान्तेष्वित्यनुवृत्तौ पुनस्तद्ग्रहणं वेद्यादिसंब-
न्धान्न पिण्डप्रयुक्तं कर्माचमनात्प्रागेवेति ज्ञापनार्थं अतो नाचान्तेषु
तत्सर्वं कृत्वाचान्तेषूदकादि दत्वा सव्योदकं दद्यादित्यर्थः । तदु-
क्तं पिण्डपितृयज्ञसूत्रे तथाच पिण्डान्ददातीत्युपक्रम्यात्र पितरः
इत्युक्त्वोदङ्मुख आतमनाऽसीमदन्तेति जपत्यवनेज्य पूर्ववन्नीवीं-
विस्रंस्य नमो व इत्यञ्जलिं करोत्येतद्व इत्युपास्यति सूत्राणि प्रतिपि-
ण्डमूर्णादशां वा यावत्युत्तरे यजमानस्य लोमानि योर्जमित्यपो निषि-
ञ्चत्यवघ्रायावजिघ्रति यजमान उल्मुकं सकृदाच्छिन्नान्यग्नावाधत्त
इति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति सूत्रार्थः । पिण्डान्द-
त्वाचम्य यवानादायात्र पितर इत्यादि उपायध्वमित्यन्तं मन्त्रं जपित्वा
प्रदक्षिणं वामेनावृत्योदङ्मुखो यथाशक्ति श्वासमवरुध्य शुभं ध्यायेत्
तथाच परिशिष्टे वामेनवर्तनं केचिदुदगन्तं प्रचक्षते स्कन्देपि प्रचा-
त्यावृत्त्याचम्य शुभं ध्यायेदुदङ्मुख इति शुभध्यानं सव्येनेत्येके तन्न
मानाभावात् आवृत्त्येतेनैव प्रदक्षिणमावृत्यामीमदन्तेति मन्त्रं ज-
पित्वाऽनन्तरं भुवि पिण्डमूले क्षिपेदित्यर्थः प्रदक्षिणमथावृत्य पूज-
येदक्षतैर्यवैरिति वाक्यात् पितॄन्मनसा ध्यात्वा ऽक्षतान्निक्षिपेद्भुवी-
ति वृद्धयाज्ञवल्क्योक्तेश्च अवनेज्य पूर्ववदित्यत्र गोत्राद्युच्चारणेनेत्यर्थः
तथाच श्रुतिः अथोदपात्रमादायावनेजयत्यसाववनेनिक्ष्वेत्यत्र यज-
मानस्य पितरमित्यादि यत्तु तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेदि-
ति वाक्यं यच्च हस्तान्नवारिणा कार्यं पुनरप्यवनेजनमिति छन्दोवा-
क्यम् तदन्यशाखिविषयं इत्तु पूर्ववदवनेज्येत्यतिदेशात् अतिदेश-

न्नानीति साग्निपरमित्युक्तं एवं षडीपयुक्तमभ्यर्चितं कृत्वा चतुर्थीत- संकल्पेन धूपादिकं निवेदयेत् तथा च स्कान्दे मनस्यर्च्य धूपदीपनैवेद्या- नि निवेदयेत् प्रकुर्यादथ संकल्पं कृत्वा चाक्षय्योदकं ततः इति ततः सुप्रो- क्षितमस्त्वित्यादिनोदकादि दत्त्वा चाक्षय्योदकं ततश्चैवाद्दद्यात्. तथा च कात्यायनः अक्षय्योदकदानन्तु अर्घदानवद्दिष्यते षष्ठ्यैव नित्यम्- कुर्यान्न चतुर्थ्या कदाचनेत्यतिदेशस्तत्रनिषेधार्थः अक्षय्यमस्त्विति- प्रोक्तः प्रत्येकमपि दलः क्रमादिति शङ्खोक्तेः

**सू० अघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रन्नो वर्द्धतां वर्द्धतामित्युक्ते दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो माव्यगमद्बहुदेयञ्च नोऽस्त्वित्याशिषः प्रगृह्य ॥ १५ ॥**

इतिरादार्थे तेन मृत्युञ्जयन्यदाशीः प्रार्थनमिति रक्षोकंकारणमित्यर्थः सन्त्वित्यवप्रतिवचनान्तर प्रार्थ्य तथा च स्कान्दे अघोराः पितरः संतु सन्त्वित्युक्ते पुनर्द्विजैः गोत्रं तथा वर्द्धतां तथेत्युक्तेश्चैः पुनः दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो माव्यगमत् बहुदेयञ्च नोऽस्त्विति अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कञ्चन इत्येता आशिषः सर्वा गृह्णीयात्प्रतिभाषितमिति अथवेतिशब्द प्रकारे तेन तिलकमूर्द्धाभिषेकाशीः प्रार्थनं सव्येन पूजादिवत्कार्यमित्यर्थः तथा च ब्रह्मयाज्ञवल्क्यः ततश्च तिलकं कुर्यान्मन्त्रेणानेन यत्नतः मन्त्रश्च नित्यानुष्ठानेत्यादि प्रागेव दर्शितः अतश्चाशीः प्रार्थनमपि सव्येनैव यज्ञोपवीतिनाकार्यमिति प्रागुक्तं दक्षिणां दिशमावाङ्गम्या चैतेमान्वराग्निमानिति

मनूक्तः देवलोपिअर्घ्यमर्घ्यमेवास्त्वित्युक्त्वा भूयः समर्चयेदिति मूर्द्धाभिषेकश्चार्घ्यदानात्प्रागित्येके ॥

**मू० स्वधावाचनीयान्सपवित्रान्कुशाना-स्तीर्य्यस्वधांवाचयिष्यऽइतिपृच्छति ॥१६॥**

स्वधावाचनीया न्युब्जोपरिस्थापिताः कुशाःपवित्राणितदध-स्थापितानि तेषाकृतप्रयोजनत्वादन्यपवित्राणिकार्य्याणीत्यन्ये त-त्कर्कादिभिर्निरस्तमित्युपेक्षितं ततश्चसपवित्रान्स्वधावाचनीय-कुशानादायास्तीर्य्यस्वधांवाचयिष्येइति पङ्क्तिमूर्द्धन्यंसर्वान्वापृच्छे-दित्यर्थं. नन्वेषामास्तरणंकिंपङ्क्तिमध्येमार्ग्गेवा नवपिण्डपुरस्तादि-त्येके तदन्तरालइत्यन्ये एतद्द्वयमपिन मानाभावात् अतः पि-ण्डोपरिसमास्तीर्य्यापोनिषिञ्चेदित्यर्थः तथाचगोभिलसूत्रं स्वधा वाचनीयान्पिण्डोपरिसमास्तीर्य्येति परिशिष्टेपि पवित्रान्तर्हिता-न्पिण्डान्सिञ्चेदुत्तानपात्रकादिति नचास्यशाखान्तरविषयत्वं स्व-धावाचनिकास्तैर्पिण्डोपरिसमाचरेदिति मात्स्योक्तेः स्वधावाच-नीयेष्विति स्वधावाचनीयाइतिकात्यायनोक्तं तन्नागेपतिनिधिः कार्य्यइत्युक्तं मुख्यद्रव्येच्छापरत्वात् तथाचउत्तरसूत्रं स्वधावा-चनीयेष्वपोनिषिञ्चतीति ॥

**मू० वाच्यतामित्यनुज्ञातः पितृभ्यः पि-तामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्र-मातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्य-तामित्यस्तुस्वधेत्युच्यमाने स्वधावाचनीये-ष्वपोनिषिञ्चत्यूर्ज्जमिति ॥१७॥**

मातादिमनुत्रायकश्च: पृथङ्निर्देशादतन्त्रता सधावाचनएव-
चेत्युक्तौ. वाच्यतामिति ॥

मू० उत्तानंपात्रं कृत्वायथाशक्तिदक्षि-
णान्दद्याद्ब्राह्मणेभ्योविश्वेदेवाः प्रीयन्तामि
तिदैवेवाचयित्वा ॥ १८ ॥

पात्रंन्युब्जं यथाशक्तीतिसमदक्षिणाविध्यर्थं ब्राह्मणेभ्यइति स्वस्त्यन्तरोक्तपितृ ह्वेशव्युदासार्थं तेनाबब्राह्मणोद्देशेनैवदक्षिणा दानमुक्तमदभिप्रेतं तथाचदेवलः भाषान्तेभ्योद्विजेभ्यश्चप्रयच्छेद्य दक्षिणामिति पितृद्देशपक्षेपितृभ्यः प्रयमभक्तागतमनस्कः समा- हितः सुवर्णंत्वाभिप्रायुक्तोदद्याच्छत्या तुदक्षिणामित्यादिविष्णुपु- राणादुक्तोन्यथाखिविषय: वाचयित्वेति कारतार्थंनिर्देशाद्विश्वे देवा. प्रीयन्तामितिमूतेतिद्विजान्मध्येयथामुक्तौ ततश्चविश्वेदेवा: प्रीयंतामिति ब्रूतेतिविप्रानध्येष्यविश्वेदेवाः प्रीयन्तामितितैरुक्ते पितृपूर्वसव्येनदक्षिणांदद्यादित्यर्थः अताग्नपितुरमुकशर्मणोमुक सगोत्रस्यवसुरूपस्य श्राद्धप्रतिष्ठार्थं अमुकसगोत्रायामुकशर्मणे वि- प्रायेयादितुभ्यमहंसम्प्रददइतिप्रयोग. तन्त्रत्वेत्वस्मत्पितृणामि तिवोध्य पितृद्देशपक्षेत्वस्मत्पित्रे पितृभ्य इतिवेलिविशेषः । सतिलनामगोत्राभ्यादद्या च्छत्यातुदक्षिणाम् स्वस्तिवाचनकं कु- र्यात्पिण्डानुधृत्य भक्तितः इतिवाक्यात् सूत्रे यद्यपि दक्षिणामितिसा मान्येनोक्तम् तथापिपितृदेवयो. रौप्यसर्णावोध्यौ कनकोत्ति र्जरा- त्तातुपितृणांरजतंस्मृ तमितिवाक्यात् अवसमसंख्यादयुतत्वा दि- तिन्यायादक्षिणादान सर्वेषांसममेवेत्येके दैवपूर्वश्राद मित्युक्तेः पूर्वदेवेदक्षिणादानं पश्चात्पितृद्वन्ये पितृद्देशपक्षेदक्षिणा दा-

नमपसव्येन दैवपूर्वब्राह्मणोद्देशेतु सव्येनेत्यपरे अपसव्यं तुतत्रापि मत्स्योविभगवान्मेने इत्यादिस्मृतेः उभयशाखस्थाद्धं कल्पादिकमपसव्येन त्यागमात्रं सव्येनेतीतरे उच्यते यदुक्तं सर्वेषांदक्षिणासमैवेतितन्न पात्रानुसारेण दक्षिणावैषम्योक्तेः तथाच एकपंक्त्युपविष्टानांविप्राणाम् श्राद्धकर्मणि भक्ष्यं भोज्यंसमं देयंदक्षिणास्त्वनुसारतइति अनुसारतः पात्रविशेषानुसारेणेत्यर्थः यत्तुदैवपूर्वदक्षिणेति तदपिन पितृउद्देशएव दैवपूर्वं मित्यस्यपर्यवसानात्ब्राह्मणोद्देशइति तथाचदेवलः दक्षिणांपितृविप्रेभ्यो दद्याद्विप्रेतरेतयोरिति यदपिपितृउद्देशे अपसव्येनब्राह्मणो द्देशेसव्येनेति तदपिन पितृपूर्वकस्यसव्ये नैवोक्तेः तथाचसएव सर्वकर्मापसव्येनदक्षिणादानवर्जितमिति नचदक्षिणादानंदैवपूर्वं तस्यविसर्गरूपत्वात् तथाचहृदयाद्यावरस्थः पूर्वंपितृभ्योदद्यात्तुदेवेभ्यस्तदनन्तरम् असुराःपितृरूपेणदक्षं हिं संतिदानवाः तेषांवैरक्षणार्थायपश्चाद्देवेविसर्जयेत् । याज्ञवल्क्योपि पितृपात्रं तदुत्तानंकृत्वाविप्रान् विसर्जयेदिति यत्त्वपसव्यं तु तवःपीति तदन्यशाखिविषयं यत्तुसंकल्पादिकमपसव्येनत्यागमात्रं सव्येनेति तन्न मानाभावात् तस्मादुभयपक्षेपि कात्यायनमतानुसारिणां दक्षिणादानंपितृपूर्वकं सव्येनैवेतिसिद्धम् तथाचहेमाद्रिपद्धतौ सूक्तस्तोत्रजपंत्यक्त्वापिण्डाघ्राणं चदक्षिणाम आह्वानं स्वागतं तंचअर्चनाचंपरिवेषणं विसर्जनं सौमनस्यमाशिषां प्रार्थनन्तथा विप्रप्रदक्षिणांचैव स्वस्तिवाचनकंविना पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिनामदेति तथा उपवीतीपितृप्रीत्यै वित्तशाठ्यविवर्जितः दक्षिणांपितृविप्रेभ्य पूर्वं दद्यादथेतरान् इतरेभ्यइत्यर्थः तथा स्वागतस्वस्तिवचनंदक्षिणांचप्रदक्षिणाम् गोत्रवादनमर्घंच षडेतेउपवीतिनइति

गोत्रवादनन गोत्रमो वद तामित्यादिनानात्मामात्मनः कर्म कारोपि याज्ञवल्क्योऽसिगोत्यात्र पात्रमुत्तानमिच्छति यमाद्यि सर्जनन्तत्वा रुच्छकर्तापिशौनक, प्रीतिरस्तामुद्वेनामिति कात्यायनादय सर्वेषामपिपत्राणाम् स्वयद्योक्तविधीयते स्वयमो तास्वभावे ग्रहणम् स्वेच्छयाभवेदिति अन्यत्र विसर्गत्वप्रति-ष्ठापात्रचालनसुपूजने देवद्विजवाचनादिकंनकुर्यात् इतिबाधा-उपलक्षणार्थत्वात् तथा मन्त्रहीनक्रियाहीनम् भक्तिहीनद्विजोत्तमा श्राद्धमपूर्णतायातु प्रमादान्नवलाममिति गोभिलोपि देवेवा-चयित्वा पिण्डपात्राणि चालयित्वा दक्षिणादद्यादिति पिण्डाद-पात्राणिचेतिविग्रह नित्यत्वात् अचालयित्वातत्पात्रम् स्वस्तिवु वैतियेद्विजा निराशाः पितरस्तेषा शप्तायान्तियथागतम् अक्षय्यञाम-सव्येनेत्येके तत्र चाचम्योदक्परावृत्य निरायम्य शनैरसून् षट् तृप्य नमस्कुर्यात्पितृनेवचसर्वदेतिवाक्यात विशेषमाह उत्तानकृत्य पात्राणिचालयेत्काले स्वयमिष्येविप्रात नत्नीभिर्नचबालेन ना सजात्याकथचनेति वृहस्पतिरपि भाजनेषुचतिष्ठत्सु स्वस्तिकुर्वन्ति येद्विजा तदन्नमसुरैर्भुक्तम् निराशैः पितृभिर्गतै भाजनानिभोजन पात्राणि स्तस्तीतिभगवन्वृत्ते तिपारस्कार, अत्रात्मनो भोदद्यादिति सु स्वधाचतुर्थ्यागोत्राद्यचारोविमाणेसूचित ततोम् त्पितुरमुकशर्मणो मुकसगोत्रस्य वसुरूपस्य श्राद्धप्रतिष्ठा र्थमक्षय गोत्रायामुकशर्मणइत्यादि तुभ्यमहसप्रददे इतिप्रयोग तत्त्वेषु षष्ठीबहुवचनेन पितृदेशपत्नेत्वक्षात्पितृदृश्य दि चतुर्थीप्रयोग वि सर्जनमन्त्रमाह।

मू० वाजेवाजेवतेतिविसृज्यानुव्रज्यमावा-

जपेदितिप्रदक्षिणीकृत्यनमस्कृत्यप्रविशेत्।१८।

ततोवाजेवाजइत्यनेन कुशमूले पितृविप्रान्पूर्वपश्चात्कुशाग्रैर्देवद्विजान्विसृज्यतताननु व्रज्यामावाजस्येत्यनेन बहिर्यज्ञोपवीतीतान् प्रदक्षिणीकृत्य नमस्कृत्यप्रविशेद्गृहमितिशेषः तत्रकुशाग्रैरेवसर्वं विसर्गइत्येके तथा वाजेवाजेतिमन्त्रेणकुशमूलेनतान्विसृजेत् देवांस्तेनैवमन्त्रेणकुशाग्रेणविसर्जयेदिति मनुरपि- आमावाजस्यमन्त्रेण कर्तव्यं हिप्रदक्षिणम् नमस्कृत्यततोविप्रानासनेषूपवेशयेत् ताम्बूलदक्षिणादत्वापाद प्रक्षालनंततः पादाभ्यागतस्य कुर्यात्पादमर्दनमेवच तत्रविसर्गप्रदक्षिणे ऽपसव्येनेत्येकेतत्र स्वागतंस्वस्ति वचनन्दक्षिणाचप्रदक्षिणामित्युक्तं छन्दोगपरिशिष्टे वाजेवाजेजपेन्मन्त्रमामावाजस्यवैपुनः बहिः प्रदक्षिणं कुर्यादच्छिन्नजलधारया बन्धुवर्गेणसहितः सभार्यः सकुटुम्बकः पुनराचम्यतत्रैव(१)स्वादुषदं जपेत्सुधीः ब्राह्मणाः सपठेयुस्तत्राहमीकृष्णिजोत्तमाः, आहारमेवसानेच पादशौचेद्विजार्चने विकिरेपिण्डदानेच षट्सुचाचमनंस्मृतमिति कात्यायनोक्तेः पिमन्त्रयेत्ततोविप्रान्प्रणिपत्यपुनःपुनः आहारमुपगच्छेयु पुनराचमनंततः वैश्वदेवंततःकुर्यात्स्वशाखोक्तविधानतइतिहारगमनासम्भवेतुबहिः प्रदक्षिणंकुर्यात्प्रदाप्य दृष्टाननुव्रजेत् बन्धुवर्गेणसहितः पत्नभार्यासमन्वितइति अथोर्ध्वंकृत्य ततोच्छिष्टमार्जनतत्प्रतिपत्तिपिण्डविकिरप्रतिपत्तिवैश्वदेवानित्यश्राद्धशेषभोजननियमादीशुच्यन्ते पठीनसि नस्पृशन्तितथादृष्टान्तथेनोच्छिष्टमार्जनंतैस्तुपृष्टे तदुच्छिष्टपितरोयान्त्यधोगतिं मचेत खनित्वानिखनेद्भूमावन्यथादर्शनंमावे

(१) संहितायामुत्तरार्द्धे । २९ । अ० मन्त्र । ४६ ।

त् निषिद्धं स्पर्शनं तेषां तच्चात्मनमुत्तमं तदोच्छिष्टमार्जने विकल्प-
निराकरणानि दृश्यन्ते तथाहि वसिष्ठः ॥ श्राद्धे नोद्वासनीयानि उच्छिष्टा
न्यादिनक्षयात् च्योतन्ते वै सुधाधाराः तैः पिबन्त्यकृतोदकाः ब्रह्मपु-
राणेऽपि अस्तं याते ततः सूर्ये विप्रयातु निचाम्भसि अधोमुखानि प्रय-
तो भूरभासर्वाणि निक्षिपेत् याज्ञवल्क्यः निक्षिपेत्सत्सु विप्रेषु द्विजो-
च्छिष्टं न मार्जयेत् श्राद्धदेशोपविष्टेषु विप्रेषु च न मार्जयेदिति विश्वामि-
प्रवरः पतन्त्येवं स्थापयन्ति दैवपात्राणि तद्दिने मार्जयेन्नपित्र्याणी-
ति तथा च देवलः एवं तृप्तेषु पानीयं दद्यादाचमनं तथा उच्छिष्टस्या-
प्यपनयेत् पितॄणां कोपमार्जयेदिति अन्ये त्वाहुः अस्तं याते त्वनेन रा-
त्रौ मार्जनविधानाद्रात्रावेवेति तन्नादरः पितॄणामुच्छिष्टमन्येद्युर्वा
वमार्जयेदित्यस्याधिकल्पोपपत्तेः ॥ द्वितीयेऽह्नि सर्वेषां मार्जनीयं
चालनं स्मृतमिति ब्राह्मवचने सर्वेषामितरेण सर्वेषामेव मार्जनोपपत्ते
द्वितीयोऽपि न सम्यगिवाभाति उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रविसर्ज
नमिति मनूक्तावपि तेष्वर्थात् तस्मात् यथासम्भवं विकल्पव्यवस्थितियुक्तं
यत्तु द्वितीयेऽह्नीति ब्राह्मवचनं तदशुचिस्पर्शरहितगृहान्तरसम्भ-
वविषयं तथा च प्रचेताः भर्तृवर्गैस्ततो भुक्त्वा कव्यशेषं स्वगोत्रजैः अन्य-
स्यां श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेदिति तस्माद्गृहान्तरसम्भ-
वति न मार्जनं तदभावे द्विजाग्र्येष्वपि पिण्डप्रतिपत्त्यनन्तरं मार्जनमिति
व्यवस्थेति सिद्धम् पिण्डप्रतिपत्तिमाह याज्ञवल्क्यः पिण्डांस्तु गोजवि-
प्रेभ्यो दद्यादग्नौ जलेऽपि वा गोशब्दो गतवीर्यवृषभपरः तथा च वायवीये
गतवीर्यस्तु यो वृषभोऽनड्वांश्चैव तथाविधः तयोः पिण्डः प्रदातव्यो यतो-
वीर्यं न रोहति एतत्कामनाविशेषेण व्यवस्थितं तथा च वायुपुराणम् पि-
ण्डमग्नौ सदा दद्याद्भोगार्थी सततं नरः पत्न्यै प्रजार्थी दद्यात्तु म-
ध्यमं मन्त्रपूर्वकम् । उत्तमां गतिमन्विच्छन् गोभ्यो नित्यं प्रयच्छति प्र-

आपश्शांवः कीर्तिमप्सु निक्षिपेत् प्रार्थयेद्दीर्घमायुस्तथावहि-
भ्यः प्रयच्छति प्राकाशं क्षिपेदप्सुस्थितो वा दक्षिणामुखः पितृणां
स्थानमाकाशं दक्षिणादिक्तथैव चेति यथागृह्यं पिण्डप्रतिपत्तिरित्यन्ये
न व्याख्यातम्; आधत्तइतिमध्यमं पिण्डम्पत्नीप्राश्नाति पुत्रकामेति
आधत्तइतिमन्त्रेणमन्त्रः सम्पूर्णस्त्वयं: अपांत्वौषधीनां रसम्प्राश-
यामि भूतकृतं गर्भं धत्स्वेति दद्यादितिपुत्रकामस्त्रीमात्रे। पत्नीत्वमि-
त्येके पुत्रकामापत्नीत्येतत्स्मृत्यन्तरं तथाचमनुः पतिव्रताधर्मपत्नी
पितृपूजनतत्परा मध्यमन्तु ततःपिण्डमद्यात्सम्यक्सुतार्थिनीति
अत्रैतत्सन्दिह्यते किंविकिरं उच्छिष्टे निक्षिपेत् किंवापिण्डेष्विति त-
त्रैकेप्राहुः तस्यास्पृश्यत्वादुच्छिष्ट एवेति अन्येत्वाहुरुच्छिष्ट पिण्ड-
स्थात्पिण्डेष्वेवेति तदुभयमपिनसम्यग्भाति उच्छिष्टपिण्डोच्छिष्टवैल-
क्षण्यात् अशुचिपिण्डत्वाच्च अतश्चपृथगेवकार्ये भौ निक्षिपेदिति
पिण्डानामपि तद्दानस्य पाक्षिकत्वात् तथाचधर्मप्रदीपे निक्षिपे-
त्सु शुचौभूमौकाकेभ्यो विकिरन्तथेति अत्रैके गृहेपिण्डत्रयं कृत्वा तु
पिण्डान्विक्षिपन्ति तदसत् तीर्थश्राद्धविषयत्वात् तथाचविष्णुधर्मो-
त्तरे तीर्थश्राद्धे सदापिण्डं क्षिपेत्तीर्थे समाहितः दक्षिणाभिमुखो-
भूत्वा पितृदिक्स्थितो हि कीर्तितेति देवदेवस्तु कारव प्रपञ्चयिष्यते नि-
त्यश्राद्धे तु मार्कण्डेयः नित्यक्रियांपितॄणान्तु केचिदिच्छन्ति सत्तमाः
न पितॄणान्तथैवान्ये शेषंपूर्ववदाचरेत् नित्यक्रियानित्यश्राद्धं तुल्य-
विकल्प एवायमिसोके करणोपकारातिशयो ऽकरणे प्रत्यवायोनि
त्यत्वे तदुभयमपिनसम्यक् पूर्वव्यवस्थोपपत्तेः तथाच नित्यश्राद्धं
न कर्तव्यं प्रसङ्गादेवसिध्यति श्राद्धान्तरेकृतेनैव नित्यत्वात्तन्नहा-
पयेदिति एकोद्दिष्टादौ पितामहादि तृप्त्यसम्भवात्कर्तव्यमपार्वणादौ
प्रासङ्गिकतृप्त्यैवेति व्यवस्थेत्यर्थः आहच दर्शादिश्राद्धनिष्पत्तौ न नि

हीयते दानंनिःफलतामेति प्रतियाकोदृग्विद्वना कृमिकूष्मासकेदासो मैथुनीसूकरोभवेदिति स्वबुद्धिकल्पितश्लोक अयनंलिखितं मया दृष्टश्रुतंससूत्रं वा नवास्माभिनद्दृष्टं दृष्टंयत्तत्स्मार्तेषु निबन्धेषुतदाहृतं श्रुतिस्मृतिविरुद्धं दयत्पठन्तोभ्युदाहरन् । प्रमाणमप्रमाणंवा मर्वज्ञःकर्तुमर्हति । दृष्टे श्रुतेनविश्वासोमाहृश्यैः कर्त्तुमिष्यते ॥

इति श्राद्धकाशिकायां तृतीयाकण्डिका समाप्ता ॥

॥ * इत्यावसथिक श्रीमद्दत्तसुखात्मज श्रीविष्णुमिश्रात्मजकृत * ॥

॥ * कृष्णमिश्रकृतौ श्राद्धकाशिकायां * ॥

॥ * अपरपक्षश्राद्धं समाप्तम् * ॥

॥ श्रीः ॥

उक्तं प्रकृतिश्राद्धमिदानींविकृतिश्राद्धमुपक्रमते ॥

## मू० अथैकोद्दिष्टं ॥ १ ॥

अथशब्दआनंतर्ये प्रकृतिश्राद्धानंतरं विकृतिश्राद्धमेकोद्दिष्टमुच्यत इतिशेषः अथशब्दो ऽधिकारार्थ एकोद्दिष्टमिति विकृतिश्राद्धोपलक्षणं ततश्च प्रकृतिवद्विकृतिरितिन्याया त्सर्वोङ्गप्राप्तौ विकृतिश्राद्धनियमोपदेशप्राप्तानाद्व कौतानिभवंतीत्यधिक्रियंतइत्यर्थः तानिच युगादिमन्वादि संक्रांतिमघाभरणी रविवार प्रेतपक्षाष्टक नव नितत्र तो यत्रिश्राद्धोपनयनोर्ध्वांक्र कपाल च्याश्रमहोमा पिण्डकर्षकस्यश्च दानि तथाहिमत्स्यपुराणादिषु अयनद्वितय श्च द्विपुत्रदर्शितमेतया संक्रांतिषुच सर्वासुपिण्डनिर्वपणाहृते पुनस्तत्र युगादिषुचकुर्वीतपिण्डनिर्वपणादृते तथा युगादौपि

तनत्रमं तथामन्वंतरादिषु अर्घपिण्डेनकुर्वीत वैष्णवंश्राद्धमाचरे-
त् वैशाखस्यतृतीयायां नवम्यांकार्तिकस्यच शुक्लस्य संक्रांतिवत्कुर्या-
त्पिण्डनिर्वपणंविना मघायुगादौभरण्यां संक्रान्तौरविवासरे पि-
ण्डदानंनकुर्वीत यदीच्छेत्सुतजीवितं सुतः मघायांपिण्डदाने न-
श्येद पुत्रोविनश्यति कनीयांस्तुवयोरश्यां कुर्यादमावास्याहते प्रेत-
श्राद्धेषु सुमंतुः विकिरंनैवदातव्यं नकुर्यादाशिषांजपः पङ्क्त्यौ-
नकुर्वीत एकोद्दिष्टे पुत्रवंशा आशिषोद्विगुणादर्भाः जपाशीःस्व-
स्तिवाचनम् पितृशब्दःस्वसंबन्धः शर्मशब्दस्तथैवच । पात्रालंभोवगा-
हश्च उल्मुकोल्लेखना दिकम् तृप्तिप्रश्नंचविकिरः शेषमन्नमतथै-
वच । प्रदक्षिणाविसर्गश्च सीमान्तानुव्रजस्तथा । अष्टादशपदार्थाश्च
प्रेतश्राद्धेविवर्जयेत् । सत्यव्रतः अनूदकमधूपंच गन्धमाल्यादिव-
र्जितम् । नवश्राद्धममंत्रंतु पिण्डोदकविवर्जितम् अनूदकमितिवै
दीर्घश्छान्दसं अवनेजनोदकरहितम् अनूद्काम् पिण्डोदकविव-
र्जितं प्रत्यवनेजनोदक रहितमितिकश्चित् तन्नोचितं स्मृत्यन्तर-
योः मदनरत्नेशः तथाच अनूदकमधूपञ्च गन्धमाल्यविवर्जितम्
निनयेद्दक्षिणपूर्वं ततःश्राद्धंप्रकल्पयेत् पश्चाद्दनिनयेत् पूर्वं त-
स्मिन्नेवयथाविधीति अस्यार्थः सर्वमन्नमन्यत्नेऽवनम् निनयेत्तत-
स्तश्राद्धपिण्डनिर्वपणाख्यं श्राद्धंकुर्यात्तश्राद्ध तत्रैव पिण्डप्रत्य-
वनेजनस्थानात् पूर्वमितिप्रत्यवनेजनमुच्यते पूर्वमपूर्वमिति दा-
तोराप्यायनार्थत्वात् एवंसत्यनूदकाम् पिण्डोदकविवर्जितं इति
पदद्वयंऊर्जंवहन्तीरित्यनेन स्वधावाचनाभ्याम् मार्जनानुनिषेकनिषेध मित्युचित-
मित्यर्थः देवलः अपि अन्नंनविकिरेद्भूमौ गृह्णीयान्नाशिषोवतु
पात्रालम्भोनवाचस्य मासनादिप्रयोगतः नामगोत्रेमासंबंध र-
हितम्पितृशब्दवत् नवश्राद्धंगृहेकार्यं भार्यायवाप्ययोपिवेति । तथा

आसीमान्तरवस्थितश्चार्च्यं पिण्डानांचनमस्कृतिः नपुण्यं पिण्डनिर्वपनम् वन्देहिमकरच्युतम् सर्वकर्मसुसर्वदा एषसाधारणोविधिरिति मत्स्यपुराणे नित्यंनावाहनबर्ज्यं ऽह्नमर्घ्यावाहनवर्जितम् दैवहीनंभवेत्तत्तु नियमादिविवर्जितं तीर्थश्राद्धंप्रकुर्वीतपाकान्नेनविशेषतः आमान्नेनहिरण्येन कन्दमूलफलैरपि एषामभावेकुर्वीत यवैश्चाचजलेनच तथाब्राह्मणान्नपरीक्षेत तीर्थकालञ्चचिन्तयेत् प्राप्ततीर्थोयदाविप्रो स्तदाश्राद्धंसमाचरेत् आवाहनन्ततीर्थेस्यात् दर्भदानन्तदाभवेत् आहूताःपितरस्तीर्थे कृतार्थाःसंतिवैद्विजाः तथा आवाहनन्नदिग्बन्धो नदोषोदृष्टिसंभवःसकारुण्यं वकर्त्तव्यम् तीर्थश्राद्धेत्रिवत्सरेः भविष्येपि देवाश्चपितरोयस्मात्गंगायान्तुसदास्थिताः आवाहनंविसृष्टिश्च ततस्तेषांनविद्यते सकारुण्यमित्यनेन पितृव्यभ्रात्रादीनाम् पुत्राणामपि तीर्थश्राद्धेयथोपदेशं कर्त्तव्यमित्यर्थः कार्ष्णाजिनिः मौञ्जीबन्धाद्विवाहस्य वर्षार्द्धंवर्षमेवच पिण्डान्सपिण्डानोदद्युः सपिण्डीकरणादतइति। सपिण्डीकरणं षोडश श्राद्धोपलक्षणम् संघहकारोपि विवाहोपनयाद्दूर्ध्वं वर्षंवर्षार्द्धमेवच नकुर्यात्पिंडनिर्वापं नदद्यात्कारणादते अत्रापवादस्तैनैवोक्तं महालये गयाश्राद्धे मातापित्रोर्मृतेहनि कृतोद्वाहोपि कुर्वीत पिण्डनिर्वपणं सुतइति त्रयाहैकोद्दिष्टेत्वत्रोपूर्वकृता नावाहनमित्युक्तिः आमश्राद्धन्तु आचारतिलके आमश्राद्धमनद्भुष्ठ मग्नौकरणवर्जितं तृप्तिप्रश्नविहीनन्तु कर्त्तव्यमानवैर्ध्रुवं धर्मप्रदीपे आशाहनाग्नौकरण विकिरप्रातपूरणम् तृप्तिप्रश्नंनकुर्वीत आमेहेमेकदाचनेति एतद्विषयमुपरिष्टाद्वक्ष्यामः अपिण्डकन्तु अग्नौकरणमर्घ्यावाहनावनेजने पिण्डश्राद्धेपकुर्वीत पिण्डहीनेनिवर्त्तते पिण्डनिर्वापरहितं यत्श्राद्धंविधीयते

स्वधावाचनलोपोस्ति विकिरस्तुनलुप्यते अक्षय्यदक्षिणास्वस्ति सौमनस्यं यथास्थितं। धर्मप्रदीपेपि। आवाहनंचैवतथार्घंमग्नौकरणमेवच अक्षय्यापोऽग्निकरं पिण्डहीनेविवर्जयेदिति इदञ्चाक्षय्यवर्जनमशक्त्यापिण्डकरणविषयं शक्तौतुयथास्थितिं विहितत्वात्। स्मृतिसंग्रहेपि अह्नानिपित्र्यकृत्यस्य यदाकर्तुंनशक्नुयात् संकल्पश्राद्धमेवासौ कुर्यादर्घादिवर्जितम् आपस्तम्बोपि संकल्पश्राद्धेऽर्घावाहनाग्नौ करणपिण्डस्वधावाचनानिवर्जयेदिति व्याघ्रादिनाययोक्तम् पार्वणङ्कर्तुमशक्तः संकल्पश्राद्धमेव कुर्यादित्यर्थः विकिरव्यवस्थाच तद्वक्षरणोक्ता हेमश्राद्धे तुबौधायनः संक्रमेन्नद्विजाभावेप्रवासेपुत्रजन्मनि हेमश्राद्धं संग्रहेचद्विजः शूद्रःसमाचरेत् व्याघ्रपादः आर्त्तवेनद्विजाभावेग्रहणेदेशविप्लवे आमश्राद्धन्द्विजः कुर्याच्छूद्रः कुर्यात्सदैवहि गालवः तीर्थेनस्नावापदि च देशभंगे रजस्यपि हेमश्राद्धन्द्विजः कुर्याच्छूद्रः कुर्यात्सदैवहीति अन्यस्मृतिभ्योज्ञेयम् अत्रैतच्चिन्त्यते किमामश्राद्धेऽग्नौ करणं स्यादुतनेति अत्रैकेप्राहुः सिद्धान्नेनविधिर्यः स्यादामश्राद्धेप्यसौविधिः आवाहनादि सर्वंस्यात्पिण्डदानञ्चभारत दद्यादन्नन्द्विजातिभ्यः शृतंवायदिवाशृतं येनाग्नौकरणङ्कुर्यात्पिण्डांस्तेनैव निर्वपेदित्यति देशेनाग्नौकरणम्भवतीति तदयुक्तम् अतिदेशस्यब्राह्मणविषयत्वात्। तथाचकल्पलतायाम् आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदःसदा हस्तेग्नौकरणं कुर्यात्ब्राह्मणस्यविशेषत; अतश्चामश्राद्धेग्नौकरण निषेधः शूद्रविषयेभवितुमर्हति किञ्चभविष्यत्पुराणे धर्मसेवान्तु धर्मज्ञोयदिशूद्रः प्रकुर्वते अग्नौकरणमन्त्रोस्य (१) नमस्कारोविधीयतइत्यग्नौ करणनिषेधान्नमस्कारविधानात् अथवाविहित प्रतिपि-

(१) अग्नयेकव्यवाहनायनम ॥ १ ॥ सोमायपितृमतेनमः ॥ २ ॥

त्वा त्वपिण्डकापिण्डकविषयौ विधिनिषेधा वकृतमधुनोच्यते त-
देकं उद्दिष्टोऽयन्न तदितिव्युत्पत्तेः नवं नवं मिश्रं पुराणञ्चेति विधेकोद्दिष्टं
तदेकोद्दिष्टमित्यनेन किमुच्यते तथा चाङ्गिराः प्रथमेऽह्नि तृतीयेऽह्नि
पञ्चमे सप्तमे तथा नवमैकादशे चैव नवश्राद्धानि षट् तथेति आश्वला-
यनगृह्यपरिशिष्टम् नवश्राद्धं दशाहानि नवमिश्रन्तु षड्ऋतून् अतःप-
रम्पुराणन्त्वे त्रिविधःश्राद्ध उच्यते हारीतोऽपि प्रायश्चित्तं व्याह चा-
न्द्रायणं नवश्राद्धम् प्राजापत्यन्तु मासिके एकाहन्तु पुराणेषु प्रायश्चि-
त्तं विधीयते इति तदेकमाहुः यथाऽऽहपार्वणस्यैवोक्तत्वा त्वेतैको-
द्दिष्टमेवैतदिति तदयुक्तं आदितमितिष्टमिमन्त्र इत्याद्यंगस्य प्रेत-
श्राद्धेषु निरस्तत्वात् नचैतन्मासिकादि नवमिश्रञ्च भवितुमर्हति
पित्रादिशब्दस्य प्रयोगा..त्वात् तस्मात्पुराणैकोद्दिष्टमेवैतदिति-
युक्तं अतश्चावाहनादि निषेधविशेषवर्जं सर्वाङ्गमत्र भवतीति
विशेषविधि निषेधयोः शेषाभ्यनुज्ञाफलकत्वादितिन्यायात् ॥

## सू० एकोर्घ्यऽएकंपवित्रमेकःपिण्डः ॥२॥

कर्तव्य इति यथालिङ्गं वाक्यशेषः पात्रविशेषणत्वा ल्लिंगव्यत्ययः
पूजाविधिर्वा प्रकृतितोऽनेकप्रसक्तौ विकृतित्वात्प्रतिषेधः तदयुक्तं
प्रसज्यमानःप्रतिषिध्यत इति भट्टोऽपि इष्टासर्वत्र शास्त्रेषु निष्टत्तिः
प्राप्तिपूर्विका तदभावा विशेषोऽत्र नहि हष्टोद्वयोरपीति पवित्रप्रा-
देशमात्र कुशैकदलम् यत्किंचित्प्रत्यवतिष्ठन्ते दर्भाःपवित्रमित्युक्तं
इतिवचनात् त्रिशाखस्तु भवेद्दर्भः चतुःशाखःकुशःस्मृतः पञ्चशाख-
स्तु निधिपः षट्शाखन्तु पवित्रकमितिपारिभाषिकत्वाच्च पवित्र-
षट्शाखैककुशमिति तदयुक्तं पार्वणेषु च सर्वेषु पवित्रं द्विदलं स्मृ-
तं एकोद्दिष्टेतु संप्रोक्तम् पवित्र छिद्रवांनृप एकोद्दिष्टे शलाके-
केति भागवतचतुर्विंशति मतवचनाभ्यामुल्लेखोपपत्तेः एकशब्दे-

पौनरुक्त्यं त्विस्पष्टार्थं ननु चैकोद्दिष्टमित्यनेनैव पिण्डैक्ये लब्धे एकगृहणं किमर्थं उच्यते पिण्डविच्छित्तिनिषेधार्थं सपिण्डपिण्डविच्छित्त्यर्थं चेत्यदोषः तदुक्तम् तिथिच्छेदो न कर्त्तव्यो विनाशौचं यदृच्छया । पिण्डश्राद्धं च दातव्यं विच्छित्तिं नैव कारयेत् सपिण्डदिने पौतिशेषः श्राद्धशब्देन ब्राह्मणभोजनम् ॥ पिण्डशब्दस्य पृथगुपादानात् चकारोऽङ्गीकरणार्थं. तेनसतिसंभवे ब्राह्मणभोजनम् पिण्डदानं च क्षयाहेकार्यं भोजनासंभवे तु पिण्डमात्रमपिकार्यमितिविच्छित्तिशब्दार्थइति माधवीये चाहिताग्ने.पित्रर्चनम् पिण्डैरेवब्राह्मणानपिवा भोजयेदिति निगमस्मृतौ वाशब्दस्य संभवासंभवेन व्यवस्थितत्वात् एवंचाब्दिकमग्निनैव कर्त्तव्यम् नामाग्निनेत्युक्तम्भवति तथा च मरीचिः अनग्निकः प्रवासी च यस्य भार्या रजस्वला आमश्राद्धं प्रकुर्वीत न तत्कुर्यात्कृते हनीति लौगाक्षिरपि पुत्त्रवत्स्वपित्रादेषु विदेशस्थोऽप्यनग्निकः अन्नेनैवाब्दिकं कुर्याद्धेम्नानाऽऽमेनवा क्वचित् क्वचिदिति दर्शे रविग्रहे च क्षयाहे सतीत्यर्थः तथा च गोभिलः दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितं अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतइति अत्राप्यसम्भवइतिविशेषणत्त्वा दसम्भवेऽग्निनैवेत्युक्तम् श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितं अमावास्यादिनियतमाससम्वत्सराहतइति हारीतोक्तेः अष्टाङ्गत्वमाह वृद्धयाज्ञवल्क्यः मधुचान्नं द्व्यघृतञ्चानीयञ्चायसन्तथा कुतुपस्तिलसंयुक्तं ज्योतिश्चैवाष्टमीतथा कपित्थश्रीफलाकारः पिण्डोऽष्टांगस उच्यते तिलैरुक्षोक्ष्यते मूढ़ क्षीरैर्वाऽऽज्यघृतेन च तत् मधुना चैव नामा च तोयैर्हस्तौ तथा परौ ज्योतिश्चैवानुजीव.स्यात्पिण्डनिर्वपणं स्मृतं यत्तु मधुचाज्यंजलञ्चार्घंपुष्पन्धूपविलेपनं वलिन्दद्यात्तुविधिवत्पिण्डोऽष्टांगो भवेद्यथेति ब्राह्मवचनन्तत्पार्वणविषय स्पूर्ववचनस्य रणोक्तत्वात् ॥



*** नावाहनंनाग्नौकरणन्नात्रविश्वेदेवाः॥३॥**

अत्रैकोद्दिष्टेविकृतित्वादावाहनाद्यं गंनभवतीत्यर्थः नन्व-यग्विशेषनिषेधार्थः अत्राद्दपद्धतिकृतयद्धदत्तः एकोद्दिष्टे तुस्व-धावाचनन्नभवतीतितन्न पिण्डरहितश्राद्धे तन्निषेधात् तदुक्तं स्वधावाचनलोपोऽस्तीतिप्राक्अतश्चास्मत्पित्रे ऽमुकशर्मणेऽमुक-सगोत्रायस्वधोच्यतामितिप्रयोगः अत्रैकआहुः अत्रप्रथमपात्राभा-वात्संस्रवद्दत्वाभावाच्चपितृभ्यः स्थानमसीतिमन्त्रानुपयुक्तत्वाच्च नात्रतत्पात्रमिति तदयुक्तं एकोद्दिष्टस्यविहितत्वात्यत्तु कर्कोपा-ध्यायैर्येवपात्रन्युब्जकरणमित्युक्तं तदन्यथैनोपपद्यते पात्रन्युब्जन्नक-र्तव्यंकिन्तूत्तानमेवनिधेयमिति अस्तिचपात्राभावान्न्युब्जत्वभावयो र्महाभेदः अलोर्णानवबोधात्तदयुक्तमिति तथाचस्कन्दस्याद्दे एको द्दिष्टे नकुर्वीतस्कन्दपात्रमधोमुखं नोत्थापयेच्चतत्पात्रं यावच्छ्रा-द्धविसर्जनं यनान्तरोत्थापितेपात्रे श्राद्धं सम्पद्यतेतथेति तस्मात्स्व-धावाचनीयानास्तीयंस्वधावाचनीयं कर्तव्यमितिसूत्रं॥

**मू० स्वदितमितितृप्तिप्रश्नः सुस्वदितमितीत रेब्रूयुः उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्य-तामिति विसर्गेऽभिरताःस्मइतीतरे॥४॥**

अत्रनेत्यनुवृत्तौ मण्डूकाप्लुत्याऽतिन्यायेन पूर्वसूत्रोक्तोविधि-रेवानुमन्यते तेनतृप्ताःस्थेतिप्रश्ने स्वदितमिदमक्षय्यमस्त्वित्यलोप-तिष्ठतां वाक्येतदेवसेनाभिरम्यतामिति विसर्गेभवतीतिवाक्य-शेषः अतश्चैतत्पुराणेकोद्दिष्टमित्युक्तं प्रेतैकोद्दिष्टे तदभावात् अयत्तयाद्दे किम्पार्वणंकार्यमेकोद्दिष्टमेवेति सन्दिह्यते उभयथा-

वचनदर्शनात् तथाहि जातूकर्ण्यः पितुःपितृगणस्थस्य कुर्यात्पार्वणंसुतः सर्वदा दर्शश्राद्धं मातापित्रोश्चयेहनीति शातातपः प्रदानंयत्रयत्रैषां सपिण्डीकरणात्परं तत्रपार्वणवच्छ्राद्धं ज्ञेयमभ्युदयादृते तथा अर्वाक्सम्वत्सराद्वृद्धौ पूर्णेसंवत्सरेपिवा येसपिण्डीकृताः प्रेतानतेषां पृथक्क्रियेति एकोद्दिष्टं तु यमः सपिण्डीकरणादूर्ध्वंप्रतिसंवत्सरंसुतैः मातापित्रोःपृथक्कार्यमेकोद्दिष्टंमृतेहनि व्यासोपि एकोद्दिष्टं परित्यज्य पार्वणंकुरुतेनरः अकृतंतद्विजानीयाद् भवेच्चपितृघातकः एकोद्दिष्टम्परित्यज्य पार्वणं यः समाचरेत् सदैवपितृघाती स्यात् मातृभ्रातृविनाशकः मृताहेपार्वणं कुर्वन् नधोधोयातिमानवः सम्पृक्तेष्वाकुलीभावः प्रेतेषुतुततोभवेदिति अत्रविरोधेकेचिदाहुः द्वादशपुत्रेष्वौरसक्षेत्रजपुत्रौ पार्वणं कुर्यातामन्ये त्वेकोद्दिष्टमिति तथाचजातूकर्ण्यः प्रत्यब्दम्पार्वणेनैव विधिनाक्षेत्रजौरसौ कुर्यातामितरेकुर्यु रेकोद्दिष्टंसुतादशेति जाबालोपि औरसःक्षेत्रजःपुत्रौ विधिनापार्वणेनतु प्रत्यब्दमितरेकुर्यु रेकोद्दिष्टंसुतादशेति विशेषोक्तेश्चादिति तदयुक्तं प्रत्यब्दमित्यनेन चयाद्व्यतिरिक्ताव्य तृतीयादिविषयत्वावगतेः एको द्दिष्टंतुकर्तव्य मौरसेनमृतेहनि सपिण्डीकरणादूर्ध्वं मातापित्रोर्नपार्वणमितिपैठीनसि वचनविरोधाच्च एवञ्चसति मृताहेपार्वणैकोद्दिष्टयो रुभयोरपिप्राप्तयोः प्राप्तत्वात् । अमायाम्वा क्षयोयस्यप्रेतपक्षे यथाभवेत्सपिण्डीकरणादूर्ध्वं तस्योक्तःपार्वणोविधिरिति शंखवचनेन दर्शप्रेतपक्षमृतयोरेव पार्वणस्यनियमितत्वात् तत्रमृतयोरेवपार्वण मन्यत्रमृतयो रेकोद्दिष्टमिति विज्ञानेश्वरप्रभृतयः। अन्येतु द्वादशविधपुत्रेष्वौरसक्षेत्रजपुत्रयो र्विशेषस्तत्रापिमाग्निन्तम् तत्रापि दर्शापरपक्षमृति रित्येवंविशेषोपसंहार

परम्परायापुरोडाशाग्नेय इति विशेषोपसंहारपर्यवसाना दर्शपरपक्ष मृतावपि साग्न्यौरसक्षेत्रजावेव पार्वणं कुर्यातां अनग्निपुत्रादिरिति वर्णयन्ति तदेतद्विचारणीयम् किंन्नियमप्रतिपादनसाध्यम् । उ-त विशेषोपसंहार इति तत्र यदि नियमप्रतिपादनसाध्यमित्युच्यते तदा दर्शपरपक्षमृतिं विनापि साग्नेः पार्वणविधानमनर्थकं स्यात् यथाह सुमन्तुः प्रत्यब्दमितरे कुर्युः एकोद्दिष्टं सुतादश अनग्निमानौरसस्य कुर्यात्साग्निस्तु पार्वणं पुलस्त्योऽपि अनग्निकौरसस्योक्तमेकोद्दिष्टं मृतेऽहनि प्रत्यब्दं पार्वणं साग्ने रन्येषां तु न पार्वणमिति अथ विशेषोपसंहारोपन्यासस्तस्य साग्नेरेव पार्वणस्य विहितत्वाद्दर्शपरपक्षमृतावपि तस्यैव पार्वणम् न निरग्नेरित्यतो ऽमायां वा क्षयो यस्येति वाक्यम् साग्निविषय एवोपसंहरणीयमिति विशेषोपसंहार एव युक्तः प्रतिभाति तथा च श्राद्धकल्पलतायां इन्दुक्षये प्रेतपक्षे विपत्तिर्वाहिताग्नेः । साग्निकः पार्वणं कुर्यादेकोद्दिष्टं निरग्निक इति । तस्मादौरसस्यैव कल्पौ प्रभुत्वात् स एव साग्निर्दर्शपरपक्षमृतौ पार्वणं कुर्यादन्यथैकोद्दिष्टमेवेति राद्धान्तः तथा च मत्स्यपुराणम् । प्रदानं यत्र तत्रैषां सपिण्डीकरणात्परं पार्वणेन विधानेन देयमग्निमतां सदा वृद्धयाज्ञवल्क्योऽपि वैतानाग्निगृह्ये येषां मातापित्रोः क्षयेऽहनि नरोपामधिकारः स्यादेकोद्दिष्टं कदाचन सपिण्डीकरणादूर्ध्वमग्नियुक्तस्य पार्वणं अनग्नेस्तु क्रिया नान्या एकोद्दिष्टस्य याचितः एकोद्दिष्टविधिस्तेषां मन्ये वाजसनेयिनां येषां माध्यन्दिनी शाखा ये द्विजा अग्निवर्जिता इति नन्वेवमस्तु हि बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव वा तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति स्मृत्यन्तरवचनं विरुध्येत् मैवं कृत्स्नवचनस्य अन्यथार्थोपपत्तेः तथा हि ये पितरः साग्नयो मृता भवन्ति तेषां निरग्निः सपिण्डनादूर्ध्वमेकोद्दिष्टं कुर्यात् ।

त्तथानिरग्नयः पितरोमृताः साग्निःपुत्रस्तदा सपिण्डनादूर्ध्वं कृता हेपार्वणं कुर्यादिति तथाचमरीचिः साग्निकोतुयितापुत्रो ह्यमा- यांस्यात्पितामृतः । पार्वणोद्दिष्टविधिस्तस्यप्रतिसंवत्सरंभवेत् । तथा माग्निकस्यपितुःपुत्रो ऽमावास्यायांमृतस्यच । पार्वणोद्दिष्टविधि- कस्य प्रतिसंवत्सरंभवेत् ततःनकश्चिद्विरोधः अभिरम्यतामिति कृत्वे केऽभिरताःस्मेति ब्राह्मिनः प्रतिवदेयुरित्यर्थः अत्रैकेऽआहुः एकएवद्विजोभोज्यः पिण्डोप्येकोविधीयते इतिवचनादेक एव- श्राद्धे एकोद्दिष्टइति तदयुक्तम् तस्यवचनस्य प्रेतैकोद्दिष्टविष- यत्वा दभावविषयत्वाद्वा अभिरम्यतामितिवदेत् ब्रूयुस्तेऽभिरता- स्मइति याज्ञवल्क्येनबहुत्वाभिधानात् इतरइतिसूत्रोपदेशाच्च- अत्रैतच्चिंत्यते किंक्षयाहश्राद्धम् नित्यकर्मकृत्वाकर्त्तव्यमुताकृ- त्वेति तत्रनित्यंकृत्वैव श्राद्धमाचरन्तीतिसदाचारः छन्दयाज्ञव- ल्क्येतु श्राद्धानंतरंकर्मकुर्यादित्युक्तम् । तथाच क्षयेहनिसमा- साद्य संस्नातोविधिपूर्वकम् स्नानंसंध्यांप्रकुर्वीत नित्यकर्मनकार- येत् नित्यनैमित्तिकञ्चान्यं त्रिविधंधर्मलक्षणं निमित्तमनुव्यति- क्रम्य.नित्यंकर्मनकारयेत् जपोहोमस्तथादानन्तर्पणन्देवतार्चनं च येहनिसमासाद्य नकुर्यात्पूर्वमेवहि क्षयाहन्तुसमासाद्य नकुर्यात् प्राक्चतर्पणं पितृघातीसविज्ञेयो वदत्येवपितामहइति तत्सदा- चारविरोधाच्चिंत्यं अथवासामगयजुःशाखिनां पूर्वंनित्यंकर्मबह्वृ- चानां पश्चादितिव्यवस्थयाविरोधः । सामगायजुषःपूर्वं स्वबह्वृचा- स्तंतथांत्तिकइतितेनैवोक्तत्वात् अथवा एकोद्दिष्टंतुयच्छ्राद्धंतन्नै- मित्तिकमुच्यत इत्येकोद्दिष्टस्यनैमित्तिकत्वेन नित्यान्नैमित्तिकं- बलीयइतिन्यायादेकोद्दिष्टमेव पूर्वंपश्चान्नित्यम् नक्षयाहनिमि- त्तकं पार्वणमपीतिव्यवस्था तथाचवृद्धयाज्ञवल्क्यः। एकोद्दिष्टेनि-

हस्ते तु तथा विप्रविसर्जने नित्यकर्मततः कुर्यात्तर्पणन्देवतार्चनम् नित्यं नैमित्तिकञ्चैव द्वावेतौ परमार्थिनौ नैमित्तिके व्यतीते तु ततो नित्यं समाचरेदिति विश्वामित्रोपि नैमित्तिकं यदा श्राद्धं पैतृकन्तु कृतेनरः तदा नित्यं न कुर्वीत तीर्थश्राद्धं विना क्वचित् नित्ये नैमित्तिके प्राप्ते नित्यं न परिलंघयेत् आदौ निमित्तकं कुर्यात्पश्चान्नित्यं समाचरेदिति अपि च पठन्ति प्रत्याब्दिके निवृत्ते तु पश्चान्नित्यं समाचरेत् अनयोर्भिन्नतन्त्रत्वात् स्थालीपाकाग्निहोत्रवदिति ।

इति श्रीश्राद्धकाशिकायांचतुर्थीकण्डिकासमाप्ता ॥

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्मन
कृष्णमिश्रकृतौ श्राद्धकाशिकायांसुवृत्तौ ।
एकोद्दिष्टश्राद्धं समाप्तम् ॥

एवं पार्वणैकोद्दिष्टमुपदिश्येदानीं सपिण्डीकरणमुपक्रमते ।

## सू० ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत ॥ १ ॥

ततः शब्दो हेतौ यतः सपिण्डीकरणमुभयात्मकम् ततउच्यतइत्यर्थः अथवा ततइति एकादशाहान्तरतः एकादशेहनीत्यर्थः । पार्वणैकोद्दिष्टानन्तरोपन्यासेनैवार्थसलब्धत्वात् एतच्च निरग्नौ प्रेते एकादशाहेदर्शसम्भवेनाग्निकर्तृविषयं एकादशाहे द्वादशाहेवेति बौधायनेन चानग्नौ पितरि पुत्रस्य साग्नित्वाधिकाराभावात् द्वैतदृश्याख्यानं मयुक्तमिति वाच्यम् भार्यामरणपचेवा देशान्तरगतेपि वा अधिकारी भवेत्पुत्रो महापातकिनो पितेति शब्देनाधिकारस्य प्रतिपादितत्वात् तस्योपादाना छौतेस्मार्त्ते दर्शानुरोधविषयत्वाच्च तथा च कात्यायनीजि

निः सपिंडीकरणं कुर्यात्पूर्वदर्शाग्निस्तत्सुतः परतोदशरात्राच्चेत्कुहू-रश्चोपरीतरइति अग्निमान्साग्निः दशरात्रात्परतएकादशेशाशौ चान्तोपलक्षणम् तथाचकात्यायनः सर्वेषामेववर्णानामाशौचांतेस-पिंडनमिति नाग्निमतांद्विजातीनामितिशेषः अश्वोपरितद्व्युत्क्र-मात् एकादशेऽहनिकुर्य्यादित्यन्वयः इतरोनिरग्निः द्वइवसिष्ठः प्र-थमास्यादमावास्यामृताहाद्दशमेऽहनि सपिण्डीकरणं तस्यांकुर्या देवसुतोऽग्निमान् मृताहादूर्ध्वं दिनमारभ्य दशमेऽहनीत्येकादशा-हइत्यर्थः ननु चैकादशाहे वृषोत्सर्गादिकर्मबाहुल्यात्कथमेतच्छ-क्यतेकर्त्तुम् नैषदोषः । पुरुषप्रयत्नसाध्यत्वात्स्वार्थस्यशक्यत्वात् अथवाएकादशाहंनिर्वर्त्य सपिण्डीकरणं कृत्वा प्रेतंसापिण्ड्य पि-ण्डपितृयज्ञानन्तरमुक्तकाले मासिकादिकुर्यादितिक्रमः मासि-कानन्तरं सपिण्डीकरणादूर्ध्वं मावित्यादपि तथाच श्राद्धनिषोड-शकृत्वाकुर्यादेवसपिण्डनं । अपिचवृद्धिविषये रेणुः कार्यव्यासङ्गतो-पिवा ग्रामाद्धादेशविप्लवात् यावदेवप्रघातावामासिकान्यकृ-तानिचेति कृत्वासपिण्डनंवृद्धि कर्मासरा न्मासिकान्यतइति एक-त्वनिर्णीतःशास्त्रार्थो ऽन्यत्राप्युपतिष्ठत इतिन्यायात्. संवत्सरेपूर्णे वृध्यभावेस्मार्त्ताग्नौप्रेते निरग्निकास्तु विषयं वृद्धिविषयस्यानन्यमा-णत्वात् तथाचभविष्यपुराणम् सपिण्डीकरणं कुर्या द्यजमान-स्त्वनग्निमान् अनाहिताग्नेः प्रेतस्यपूर्णेऽब्देभरतर्षभ पुत्रस्त्योपि निरग्निक.सपिण्डत्वं पितुर्मातुश्चधर्मतः पूर्णे संवत्सरेकुर्यात् वृद्धि-र्यावदृष्टभवेत् रेणुरपि निरग्निर्यदादाकर्ता प्रेतश्चोपासनाग्नि-मान् सपिण्डीकरणन्तस्य पूर्णेऽब्देनात्रसंशयइति । विपक्षइत्य-यंशब्दः प्रेतकर्तारौद्वावाहिताग्निविषयत्वेन समाहारमध्यमप-दलोपाभ्यांद्वैधाविवक्षितः । तथाहि अथ.पक्षासमाहृता त्रिपक्षः

पावादित्वान्ङीषभावः अथवांतिभिर्दिनैरूनःपक्षो त्रिपक्षोद्वाद-
शाहः ततश्चाहिताग्नौप्रेतेनिरग्निःकर्त्ता तृतीयपक्षेप्रेतेवानिर-
ग्नौ आहिताग्निःकर्त्ता द्वादशाहेसपिण्डीकरणंकुर्या दुभयोरना-
हिताग्नित्वेसाग्नित्वेवा द्वादशाहएवेतिव्यवस्थेत्यर्थः अयंविषयोवा-
शब्दस्यव्यवस्थितार्थत्वात् सम्भवेसतिघटते तथाचसुमन्तुः प्रेतश्चे-
दाहिताग्निः स्यात्कर्त्तानग्निर्यदाभवेत् सपिण्डीकरणन्तस्यकुर्यात्प-
क्षेतृतीयके गोभिलः साग्निकस्तुयदाकर्त्ता प्रेतश्चानग्निमान्भवेत्
द्वादशाहेतदाकार्यं सपिण्डीकरणंसुतैः साग्निकःआहिताग्निः
ननुच साग्निकशब्देन कथमाहिताग्निः समानेनाऽग्निमद्वाचक-
त्वात् उच्यते तथाहिताग्नौप्रेते निरग्निःकर्त्ता तथानिरग्नौप्रेते
आहिताग्निःकर्त्तेति शङ्कायाविद्यमानत्वात् तथायजमानोग्नि-
मान् राजन्प्रेतश्चानग्निमान्भवेत् द्वादशाहेतदाकार्यं सपिण्डीक-
रणंसुतैरिति । भविष्यत्पुराणवचनेऽग्निमच्छब्दवत् भूम्निमतुपः-
श्रवणादाहिताग्निवाचकत्वसम्भवत्वाच्च नचाहिताग्निश्च सुमा
नधर्मेत्युचितं किञ्च सपिण्डीकरणङ्कुर्या द्यजमानस्त्वनग्निमान्
अनाहिताग्नेःप्रेतस्यकालान्तरेणविपर्यान्तस्योपलब्धत्वात् उभयो-
राहिताग्नित्ववचनं साग्निकस्तुयदाकर्त्ताप्रेतोवाप्यग्निमान्भवेत्
द्वादशाहेसदाकार्यं सपिण्डीकरणम्पितुरिति अत्रापिवाशब्दः-
आहिताग्न्यनाहिताग्निविषयत्वेनव्यवस्थितार्थः ततश्चनिरग्नौ-
प्रेतेसाग्निः कर्त्ताशौचान्तेसाग्नौ प्रेतेनिरग्निः क-
र्त्तापूर्णेब्देआहिताग्नौ प्रेतेआहिताग्निःकर्त्ता द्वादशाहएवषोड
शश्राद्धानिकृत्वासपिण्डी - करणङ्कुर्यादितिमुख्योर्थः तथाच बृह-
मनुः द्वादशेहनिविप्राणामाशौचान्तेतुभूभृतां वैश्यानांचत्रिप-
क्षाद्वावथवास्यात् सपिण्डनमिति वाशब्दः स्मृत्यन्तरोक्तव्यव-

स्यायाम् अतश्चसाग्निनामितिशेषः अथवाहि साग्निश्नाहिताग्नि शब्दौमाग्निनिरग्निपरौ तेनसाग्निकः कर्त्ताचेत्त्वेकादशाह द्वादशाहकालयोः दर्शानुरोधेननियमः तथाचर्म य्हकारः द्वादशाहादिकालेषु सपिण्डीकरणेकृते साग्न्यनग्निकर्तृविषयःकर्तुरेवनियामकइति अतश्चपिण्डपितृयज्ञानुरोधात् साग्नेरेवद्वादशाहादिकालकर्तृत्वंननिरग्नेरित्युक्तं भवति तथाच गालवः सपिण्डीकरणात्वे ते पैतृकम्पदमास्थिते आहिताग्नेः सिनीवाल्यां पितृयज्ञःप्रवर्त्ततइति आहिताग्नेः सिनीवाल्यामितिचसाग्निदर्शयोरुपलक्षणं प्रमादात्कालातिक्रमेतु गोभिलः। द्वादशाहादिकालेषुप्रमादादननुष्ठितं सपिण्डीकरणङ्कुर्यात् कालेषूत्तरभाविषु उत्तरभाविषु त्रिपक्षादिषु यदुर्वंत्युभयो रप्यनग्निरग्निविषयं -इहेःपूर्वमित्यर्थः असपिण्डीकृतस्य वृद्धौदानानर्हत्वात् वाशब्दःस्मृत्यन्तरोक्त कालसमुच्चये तथाच बौधायनः सपिंडीकरणसम्वत्सरेपूर्णे त्रिपक्षेवातृतीयेवामासिचैकादशेवेतिभविष्येपि द्वादशाहेत्रिपक्षेवा षण्मासेवात्रिमासिवा एकादशेवापिमासि मङ्गलस्योपस्थिताविति मङ्गलेवृद्धौ अलोत्तरोत्तरकाले इवि सम्भवेपूर्वकालेवृद्ध्यनुरोधेनेति सपिंडीकरणङ्कुर्यादित्यर्थः एवञ्च संत्युभयोरनग्नित्त्वे वृद्ध्यनुरोधेनैवसंवत्सरादर्वाक्सपिंडीकरणापकर्षोन्यथानित्यं क्षमवति तथाचशाठ्यायनः प्रेतश्राद्धानिसर्वाणि सपिंडीकरणं तथा अपकृष्यापिकुर्वीत कर्त्तानांदीमुखेद्विज इति तथा अन्तरेणैवयोर्वृद्धिं प्रेतश्राद्धानिकर्षति सश्राद्धीनरकेघोरेपच्यतेपितृभिःसहेति अपिच नागरखंडे ततःसपिंडीकरणं वत्सरात्पूर्वंत स्थितं वृद्धिर्वागामिनीचेत्स्या त्तदर्वागपिकारयेत् उशनाअपि पितुःसपिण्डीकरणम् वार्षिकेमृतवासरे आधानाद्युपसम्प्राप्तौ वेतत्प्रागपि-

वत्सरादिति आदिशब्दस्तीर्थलाभाद्यर्थःवाराणस्यांकुरुक्षेत्रे गया-
यांतीर्थलाभतः सपिंडताद्वादशाहे मार्गेसार्थे क्रतुर्गतइतिवचना-
त् ततःसंवत्सरेपूर्णइतिसूत्रं केचिदन्यथैवव्याचख्युःतत्रविषय-
व्यवस्थाभावान्नादरोऽस्माकम् नचकात्यायनः अथातोऽधिकारस्-
त्यारम्भः श्रौतस्मार्त्तकर्मणि श्रौताग्निस्मार्त्ताग्निमद्विषयाण्यभिधाय
सपिंडीकरणमेवकेवलं साग्निकविषयमन्तरेण निरग्निविषय-
त्वाद्गम्येतिसम्भवान्नायं यतोमदुक्तापिव्यवस्था सूत्रस्येतिमामनुक्त-
स्यापिप्रथितःसङ्केतः नन्वेवंव्यवस्था सूत्रस्यनघटतइत्याशङ्कनी-
यम् ऋषिप्रणीतत्वेन सूत्रमगृह्णनार्थत्वात् तस्मादाहिताग्न्यना-
हिताग्नि निरग्निविषयत्वेनोक्तैवव्यवस्थेतिसिद्धम् अतःकश्चिद्वा-
प्यकृदाब्दवर्षपर्यन्तनवंकर्मलोपभयात् आनन्त्यात्कुलधर्माणाम्पुंसां-
चैवायुषःक्षयात् अस्थिरत्वाच्छरीरस्य द्वादशाहःप्रशस्यतइतिवचना-
च्च। एकवर्षपक्षएव नशोभनइति तद्व्रक्तस्मृतिवैयर्थ्यान्नादरणी-
यंअंतरेणैवयोगइति नित्यमेनपत्यन्नायोपलब्धेःआनन्त्यात्कुलधर्माणां-
शरीरस्यास्थिरत्वेति हेतूपन्यासादस्यवचनस्यकुलधर्मपरत्वाद्गता-
ग्निकर्तृविषयत्वावगमाच्च किञ्च सतिसंभवेसिमपिण्डस्याव-
र्तितएवसमापनविधानात् तथाच पूर्णेसंवत्सरेपिण्डः षोडशःपरि-
कीर्तितइति पिण्डःश्राद्धोपलक्षकः एवंकालमभिधाययोगमाह ।

मू० चत्वारिपात्राणि सतिलगन्धोदकानि-
पूरयित्वात्रीणिपितॄणामेकम्प्रेतस्य ॥ २ ॥

पात्राण्यर्घपात्राणिविश्वेदेवदानन्नपक्षइतिचत्वारीत्युक्तं म-
तिलेत्यत्रअक्षतानां हिरण्यस्यतिलयुक्तत्वेनअपिशब्दोपादानसंवरोहित्यद्यो-
तनार्थं अथवा तिलोऽसिसोमदैवत्यइतिप्रेतपात्रे मन्त्रोऽपरिणामार्थ..

तथाचैकादशाहश्राद्धे रेणु: तिलोसिप्रेतदेवत्य:प्रेतालोकान्प्रीणो-
त्तमं मन्त्रमुक्त्वातिलानेवप्रक्षिपेदर्घपात्रतन्त्रीति वीर्याणिपितॄणामेकस्य
तस्येतिक्रमदृष्टि: तेनवैश्वदेवकृत्यानन्तरं प्रेतकृत्यं तत: पितृकृत्य-
मिति एकोद्दिष्टस्यसपिण्डीकरणातभावात् तथाचवैजवाप: चत्वा-
र्युदकपात्राणिप्रयुनक्ति तत्रैकंप्रेतायत्रीणिपितृभ्यइति तदयुक्तम्
सूत्रोक्तक्रमस्यवैयर्थ्यात् नचवैजवापवचनं वाजसनेयिविषयं बहृचवि-
षयत्वात् तथाचतत्सूत्रम् चत्वार्युदपात्राण्येकं प्रेतस्यत्रीणीतरे-
षामिति अतोवविषयानवबोधादयुक्तमित्युक्तम् तथाचकठश्रुति:
दत्त्वापिण्डान्पितृभ्यस्तु पश्चात्प्रेतायपार्थिव: तत्तुपिण्डंत्रिधाकृ-
त्वाथानुपूर्व्याच्चसंततम् निदध्यात् त्रिषुपिण्डेषुएषसंसर्जनेविधि:
चतुर्थपिण्डम् उत्सृज्यत्रिधाकृत्वापिण्डे पुनर्निदध्यादिति लौगाक्षि-
वचने पिचतुर्थपिंडस्यसंस्थानप्रतीते: नचैकोद्दिष्टस्यदैवपूर्वत्वं-
युक्तम् तथाचशातातप: सपिंडीकरणंश्राद्धं दैवपूर्वंनियोजयेत्
पितॄनेवाशयेत्तत्रपुन: प्रेतन्ननिर्द्दिशेत् इति यत्तुप्रेतपूर्वकंपित्र्य-
श्राद्धमाचरन्तितद्भ्रान्तिनिबन्धनमित्युपेक्षणीयम् तथाचमार्कण्डेय
पुराणे तिलगन्धोदकैर्युक्तं तत्रपात्रचतुष्टयम् कुर्यात्पितॄणांत्रितय
मेकम्प्रेतस्यपुत्रक धर्मप्रदीपेपि श्राद्धद्वयमुपक्रम्य कुर्वीतपूर्वपिण्डदानं
तयोस्त्रिपुरुषपूर्वमेकोद्दिष्टन्तत:परमिति यत्पुन:पूर्वोक्तागस्त्य-
म्प्रेतमुत्तरांस्तुपितामहान् चतुर्भि:पिण्डैर्भियुक्तं पार्वणचतुर्भोमत-
इति चतुर्विंशतिमतमुक्तं तद्वेश्वदेवात्पूर्वं प्रेतश्राद्धानुष्ठानविषयं द्रष्ट-
व्यं तथाचरणात् बहृचविषयंच तस्मात्पूर्वोक्त एवक्रम इतिसिद्धं एवंच
पितॄणामित्यत्रैकशेषसमासान्मात्रादीनामपीति मन्तव्यं पुरु-
षप्रधानं पूर्वंजलिकपूरणेन सपिण्डनकृतंस्यात् वैश्वानरत: आदि
त्वात्तथाचहारीत: तत:प्रभृतिवैप्रेत: पितृसामान्यमाप्नुयात् हिंद-

तेपितृलोकञ्च ततःश्राद्धमवर्त्तते तथा पितृलोकङ्गतश्चान्नंभुक्तं श्राद्धं स्वधासमं पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छतेति ब्रह्मपुराणेपि मृतेपितरियस्याथ विद्यतेचपितामहः तेनदेयास्त्रयःपिण्डाः प्रपितामहपूर्वकाः तेभ्यश्चपैतृकःपिण्डो नियोक्तव्यश्चपूर्ववत् मातर्यमृतायान्तु विद्यतेचपितामही प्रपितामहीपूर्वन्तु कार्यस्तासामयंविधिरिति यत्तुमनुनोक्तम् व्युत्क्रमाच्चप्रमीतानां नैवकार्यासपिण्डतेति तन्मात्रादिविषयव्यतिरिक्तविषयं तथाचस्कन्दपुराणम् व्युत्क्रमेणमृतानाञ्च सपिण्डीकृतिरिष्यते यदिमातायदिपिता भर्तानैषतदाविधिरिति एवंविधिव्युत्क्रममृतौ सापिण्ड्यनिषेधविधिरित्यर्थः । सुमन्तुः त्रयाणामपिपिण्डानामेकेनापिसपिण्डने पितृत्वमश्नुते प्रेत इतिधर्मोव्यवस्थितइति अत्रैतच्चिन्त्यते किमपुत्रस्य सपिण्डीकरणं स्यान्नवेति तत्रैकेककर्दयश्चाहुर्नेति तथाचयच्च पिण्डकरणं प्रथमः पितॄणाम्मेतःस्या त्पुत्रवांश्चेदिति स्मृतिरपि अपुत्रस्य परेतस्य नैवकुर्यात्सपिण्डताम् आर्यौवमुदकम्पिण्ड मेकोद्दिष्टं नपार्वणं अपुत्रायेमृताःकेचि त्पुरुषावाल्स्त्रियोपिवा तेषांसपिण्डनाभावादेकोद्दिष्टं नपार्वणमिति अन्येत्वपुत्रस्यापिभवतीत्याहुः तथाचरेणुः भ्रातावाभ्रातृपुत्रोवा सपिण्डःशिष्यएववा सपिण्डीकरणंकुर्यात्पुत्रहीनेमृतेसति भ्रातादिभिरपुत्रस्य सपिण्डीकरणेकृते एकोद्दिष्टन्नियमतः कार्यन्तस्येवसर्वदेत्यादि एवंद्वैधेसति करणे उपकारोऽकरणे प्रत्यवायोनेति केचित् आपदनापद्विषयत्वेन व्यवस्थेत्यन्ये एतदुभयमप्य विचारितरमणीयम् ककर्दिपक्षेसापत्न्या पुत्रस्य असपिण्डनेदौहित्रकर्तृकपार्वणादौ असपिण्डनस्य दानानर्हत्वापत्तेः विधायकवचनैस्तस्यबाधितत्वाच्च द्वितीयपक्षेतूक्तव्यवस्थापने सपिण्डनस्यानियतत्वेन पिण्डस्यानर्हप्राप्त्यानर्हत्वदोषस्तादवस्थ्यापत्तेः

तस्मादपुत्रशब्देनानपत्यस्य निश्चितत्वात्करणम् सापत्यविषयमकर
णञ्चानपत्यविषयमितिव्यवस्थेत्यविरोधः ।

**मू० प्रेतपात्रम्पितृपात्रेष्वासिञ्चति येसमानाइतिद्वाभ्याम् ॥ २ ॥**

पात्रपात्रोदकम् तेनकर्तायेसमानाइतिऋग्द्वयेन प्रेतार्घोदकम्पि-
तृपात्रेष्वासिञ्चति मेलनेनसंस्कुर्यादित्यर्थः अत्रसंस्कारप्रयोजनत्वा
त्पूर्वमासिंच्यपश्चात्पितृपूर्वञ्चतुर्ष्वर्घदानमितिक्रमः अथैतत्सन्दि-
ह्यते प्रेतशब्देनकिञ्चतुर्थःपुरुषोभिप्रेतः उताहो(१) न यमृतइति
उभयथापि वचनदर्शनात् तथाहि हरशाङ्गवल्क्यः इदस्यैवतुयत्पात्रम्
तत्त्रिञ्चे प्रपितामहे तत्सुतेपि ञ्चयेत्पात्रन्तरसुतेसिञ्चयेत्पुनः इहर-
सिद्धञ्च नवातीतार्घपात्रञ्च पिण्डांश्चपरिकीर्त्यते पितृपात्रेषुपिण्डेषु
सपिण्डीकरणं तुतसृइनि तथानिबन्धकृतोपि विश्वरूपप्रभृतयः केचि
त्पक्षेणे तामृतःप्रेतइतिव्युत्पत्त्या चतुर्थस्यार्घपिण्डयोस्त्रिधाकरणे
नासिकमेलनाभ्यामपि पिण्डत्रयस्यएककरणम नचमृतस्यापि अर्घ-
पिण्डयोस्त्रिधाकरणे न पिण्डत्रयमेलनमित्येवं संशयः तत्रैकशाह.
उभयथास्तन्वा दुभयमतमानीषिकत्वाच्च विकल्पएवेति अत्रते-
मष्टव्या. किंविकल्पःसाधीयान्नुतव्यवस्थेति तत्रयदिविकल्पःसा-
धीयानित्युच्यते तदाष्टदोषदुष्टत्वंसम्भवति अथव्यवस्थासाधीयसी
तर्हि सम्भवेन दोषाभावात्सैवग्राह्येति नचव्यवस्थासम्भवे ऽष्टदो-
षदुष्टोविकल्पो मीमांसकस्यग्या तस्माद्व्यवस्थैवग्राह्येति । तथा-
चाङ्गिराः प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः सीदन्तिहि-
प्रमाणानि प्रमाणैरव्यवस्थितैः वसिष्ठोपि अव्यवस्थासर्वत्र तद्वि-
नाशनमात्मनइति अतश्चसाग्निक कर्ता चतुर्थपुरुषस्यैवार्घपिण्डौ

(१) ममभक्तारमतइत्यर्थः ॥

विनाकृत्वा सपिण्डनङ्कुर्यात् निरग्निककर्तृत मृतस्यैवार्घपिण्डन्वेधाकल्पयेत्यविशेषः तथाचकाश्यपः प्रपितामहस्यष्टस्य अर्घपिण्डक्रियात्रिधा इतरेषुनियुञ्जीत सपिण्डीकरणेग्निमान् इहयाज्ञवल्क्योपि इत्प्रपितामहपिण्डन्त्रिधाकारयेद्बुधः प्रकर्षेणगतः प्रेतो नपितामे तउच्यते स्मृत्यन्तरेपि प्रेतपात्रोदकपिण्ड मितरेपुनियोजयेत् त्रिधाकृत्वाक्रमेणैव सपिण्डोत्तनिरग्निकइति प्रेतपात्रोदकन्तत्र मृतपात्रोदकम् इतरेषुपितामहादिपात्रेषु ॥

## मू० एतेनैवपिण्डोव्याख्यातः ॥ ४ ॥

एतेनेत्यर्घोदकतोयेन पिण्डोव्याख्यातो ऽर्घोदकवत्पिण्डोपि त्रिधाकृत्वा पितृपिण्डेषु योजनीयइत्यर्थः एवंकारोनेनैव पङ्क्तिर्भवतीतिनियमयति एवञ्चसति व्युत्क्रममृतौ पत्न्याः सहगमनमृतौ च यथाहं प्रपितामहभर्तृ सपिण्डने सत्यपिपार्वणान्वष्टकादौ पङ्क्तिसिध्यर्थम् पुनरपिपितामहप्रपितामह्यादिभि र्यथायोगंसपिण्डीकरणम् कर्तव्यमित्युक्तंभवति तथाचरेणुः व्युत्क्रमेणप्रमीतायेतद्विमाप्रेतताधुर्वं पुनःसपिण्डनंतेषां कुर्यात्तेतोपितामहे अन्वष्टकासुद्धयादौ पितामह्यादिभिःसह श्राद्धेसत्युपपन्नंस्या त्रचपित्रासपिण्डनम् उशनाः अवपिड्तोयदापिण्डः पत्याचैकेनयोजितः अन्वष्टकेपुकर्षूणां तर्पणे चपृथक्पृथक् पुनःसपिण्डनंकार्यं पितामह्यादिभि.सह पठन्तिच व्युत्क्रमेणापिमापिंडाम कार्यमाचार्यसंमतं तथाप्यूर्ध्वस्सोपिध्येकृतेसपुनराचरेदिति एवमन्यत्राप्यूह्नीयं अत्रैतन्मीमांस्यते किंसहगमनेपत्न्याः सापिण्ड्यकेवलं भर्त्रैवसहकिम्वा श्वश्र्वादिभिरपीति तत्रैकआहुः पत्याचैकेनकर्तव्यं सपिण्डाकरणंस्त्रियाः सामृतापिहितेनैकं गतामन्त्राहुतिव्रतैरि-

स्यैकोद्दिष्टस्य मुख्यत्वाच्चकारेण दर्शश्राद्धस्य च पार्वणश्राद्ध पत्न्येक-
स्त्वपितामहाद्युपलक्षणमिति अन्ये तु पुनरेकशब्देन जीवत्पिता-
पितामह्या मातुःकुर्यात्सपिण्डनं प्रमीतपितृकः पित्रा पितामह्या-
पितामहसुतः तन्मातातत्पितामह्या तच्छ्वश्र्वावासपिण्डनं श्वशुरादि-
त्रिवाहेषु विद्वानांयोपितांस्मृतमिति वचनविहितस्य विकल्पचतु-
ष्टयस्य नियतगत्वमितिव्याचक्षते ततश्च पित्रादित्रयेण पत्न्याः
सपिण्डनमिति उभयेषामभिप्रायः तदपरेनक्षमन्ते पत्न्याःपिण्डस्य
श्वशुरादिपिण्डेषु. मेलनमनुचितत्वादन्ते. अतश्चसत्यपिपार्वणत्वे
ऽन्वारोहणे भर्त्रैकेवलंपत्न्यः सपिण्डनमित्येषामभिप्रायः एवं
चसत्यन्वारोहणेभर्तृमरणेनैव सापिण्ड्यं युक्तमित्याभाति मृता-
यानुगतानांयस्मात्तेनसहपिंडतां अर्हति स्वर्गं यावदाभूतसं-
प्लवमित्यनेन विशिष्टविधानात् पार्वणादावपि तासांभागित्वं
पिंडदानेष्वपि कुशेष्वग्निरोपणादि विधानोपपत्तेः तथाच श्व-
शुरस्यापत्नी यस्मात्क्षिरः प्रच्छादनक्रियेतिप्रागुक्तम्। तथाचष्ट
मादिपद्धतौ पत्याचैकेनकर्तव्यं सपिंडीकरणं सुतैः सहयाने तु-
मातॄणां सहोगतपितामहौ वचनान्तरमपि तत्रयाह: मातुः
सपिंडीकरणं क्रियते स्वामिनासह मातृकम्पैतृकम्पिंडमेकीकृ-
त्यविधानतः। लौगाक्षिरपि पितामह्यादिभिस्त्रीभि मातरन्तुस-
पिंडयेत् पितरिध्रियमाणेतु तेनैवोपरतेऽपि पुराणसमुच्चये पि-
तामह्यादिभिःसार्धं पितुःकुर्यात्सपिंडतां मातुर्भर्त्रासहैकेन नत्व-
न्यैःश्वशुरैः सहेति पद्धतिकारणानुपागेवाभिहित मित्यलंबहुना
अत्रकेचिद्वदन्ते सहगमनकर्त्तुःसपिण्डनम् विधाय पश्चात्पत्न्या
अपिसपिंडनमिति द्वयोःसपिंडनंपृथक्पृथगिति अन्येपुनर्दम्पत्योः
परस्परममन्त्रकपिंडद्वयम् मेलनंकृत्वा ऽनन्तरन्त्रिभिःसहभर्त्तुः स-

पिंडनेपत्न्या अपिक्तंतंभवेदित्येकामेवसपिंडीकरणमित्याहुः तन्न सहगमनेनुगमनेच भर्त्रैकेनसह पिंडनस्य विहितत्वादेकमेव सपिंडीकरणंयुक्तमित्याभाति तच्चासंस्कृतेन पत्यासपिंडनमयुक्तमितिवाच्यम् असंस्कृतौनसंस्कार्यौ पूर्वंपौत्रप्रपौत्रकैः पितरस्तत्रसंस्कुर्यादितिकात्यायनोब्रवीत् पापिष्टमपिशुद्धेन शुद्धंपापकृतापिवा पितामहेनपितरं संस्कुर्यादितिनिश्चयइतिकात्यायनवचनात् पापिष्टमगतप्रेतभावं शुद्धेनप्रेतत्वरहितेन तथाशुद्धं गतभावं पापकृताप्रेतेनपितरंसंस्कुर्यादित्यर्थः अनेनवचनेनासंस्कृतेनापि मेलनमभ्यनुज्ञातं तस्मादेकमेवसपिंडीकरणमितिनिष्ठं तथाचदेवलः पृथक्चित्यांसमारूढा म्रियतेतुमृतापिवा पत्न्यावैकेनकर्त्तव्यं तस्याअपिसपिंडनं पृथक्चित्यांसमारूढा यानारी तुपतिव्रता स्वामिनामपिंडत्वे तस्याअपिक्तंतंभवेत् दंपत्योर्मध्येद्विजश्चैकम् भोजयेद्वीक्षतथोत्तरे तयोःसपिंडीकरणन्तुदम्पत्योःपिंडयोरिति स्मृतिरपि मृतेपितरिमातुस्तु नकुर्यात्सहपिंडनं पितुरेवसपिंडत्वेतस्या अपिक्तंतंभवेत् अन्यत्र देशकालद्रव्यदेवकर्त्तव्ये सान्निकोविधिः भेदेपुनर्निमित्तानां कर्मावृत्तिरपीष्यते स्मृत्यर्थसारेपि अन्वारोहणे त्वेके चित्यारोहणे स्त्रियाः पृथक्सपिंडीकरणन्नकार्यमिति अन्येपुनराचक्षते ॥ सपिंडनेऽप्यर्घचतुष्टयम्: पिंडदानंकृत्वानन्तरं सपिंडाप्रत्यवनेजनादिसर्वंकर्म मृतमारभ्यैवकर्त्तव्यं पुनःप्रेतनिर्देशादितिवचनात् एवञ्चसतिप्रत्यवनेजनादिसर्वंकर्ममृतमारभ्यैव कर्मसुपितामहपिंडे पितुर्देवतात्वं पितामहपिण्डे पितामहस्य वृद्धप्रपितामहपिंडे प्रपितामहस्यैवंत्रयं चतुर्थस्यनिवृत्तिरितितेषामभिप्रायः तदयुक्तं उपक्रमोपसंहारविरोधात् द्वेनैवारभ्यतेनैवसमाप्तिरितिन्यायबाधादेकस्मिन्पिंडे

ऽन्यथ निर्देशेद्विदैवतैकत्वसम्भवादुपक्रान्त क्रमस्यानर्थक्यापत्तेः
नचतदेष्टं स्मृत्यन्तरे श्राद्धसमाप्तावेव पिंडमेलनस्याविहितत्वात् ।
यत्तु पुनःप्रेतं ननिर्दिशेदित्युक्तं तदपिमापिंडाश्राद्धोत्तरश्राद्धे पु
प्रेतशब्दनिर्देशाभावप्रतिपादनपरंनपुनर्व्युत्क्रमप्रयोगविधायकम्
तस्मात्सूत्रोपक्रान्तक्रमेणैव श्राद्धं कृत्वान्ते पिंडसंमेलनं कर्तव्यमि-
तियुक्तं तथा चब्रह्मपुराणे सुवर्त्तुलांस्ततस्तांस्तुकृत्वा पिंडान्प्रपू-
जयेत् अर्घैः पुष्पैस्तथाधूपै दीपमाल्यानुलेपनैरिति अत्रैकेऽप्याहुःपु-
त्रेणैवतुकर्तव्यंसपिंडीकरणं स्त्रियःपुत्रपक्ष्ये तस्यान्येभ्रातृपुत्रादयो
पिये अपुत्रायांमृतायान्तु पतिःकुर्यात्सपिंडता मित्याभ्यांपतिपुत्र-
योरेवाधिकारस्तादभावेस्त्रीणां सपिंडनंनास्तीति अन्येतुसर्वंचसर्वस्य
भवतीत्याहुः एवञ्चसत्यवचनं अनपत्यास्त्रीविषयमित्यस्मन्मतिः ।
तथाचपठंति कुर्याद्वेमृतभर्तृकायदिमृता पुत्रः स्वभर्त्रैव तत्
सापिंड्यं सचबांधवामृतयुवतिभिर्भर्तारमन्वेतियातस्याभर्तृसपिं-
डनंतुसवती भर्तारमन्वेति या तस्यास्त्रीभि रनुक्रमादितिह घट्-
त्रिंशन्मतेनिर्णयः अस्यार्थः मृतभर्तृकायाः सपिंडनञ्चेत्पुत्रःक-
रोति तदाभर्त्रैवकेवलसपिंडयेत् जीवद्भर्तृकायास्तु पितामह्यादि
भिरेव यातुभर्तारमनुगच्छति तस्याश्चपुत्रायाभर्त्रैवसपिंडनम् ॥
अनेनचपतिपु-
पुत्रिण्यास्त्वनुगमनेपि पितामह्यादिभिरेवेति ।
लाभावेपि सपिंडनमस्तीतिगम्यते अतश्चोक्तेवव्यवस्थेति तथाच-
धर्मप्रदीपे अपुत्रायोपितःपिण्डं भर्तृपिंडेनयोजयेत् यदिजीवतिभ-
र्तातु स्वश्र्वादिषुसमावेशयेदिति अपुत्रामापत्यामृतास्त्री अनप-
त्यायाः सापिंड्या प्रयोजनानुपयुक्तेः एवं तत्सन्दिह्यते किंसपिं
डीकरणे श्राद्धद्वयमेकपाकेन उतातत्पृथक्पाकेनेति उभयथावचन-
दर्शनात् तथाह्योदनञ्चपृथक्पृथगिति तथासपिंडीकरणम् श्राद्ध

पृथक्पाकेनगस्यतद्गति रेणुस्तुपाकैक्यमाह एतश्राद्धद्वयक्तु यत्
कार्यैक्यादेकपाकत: एकोद्दिष्टस्यार्थं गाञ्च शेषम्प्रकृतिवद्भवेत् इति
अत्रव्यवस्थीयते पृथक्पाकविधान मसपिंडनविषयम् पाकैक्यवि-
धानन्तु पुन:सपिंडीकरणविषयमिति अन्यथाविरोधापत्ते: नच
विकल्प: सम्भावनीय: अष्टदोषदुष्टत्वात् पुत्रिकापुत्रविषये बौधा-
यन. आदिमेत्मयमेपिंडे मातरम्पुत्रिकासुत: द्वितीयेपितर स्तस्य
तृतीयेचपितामहम चशब्दश्चतुर्थे चतुर्थसमुच्चयार्थ. गोत्रविषयेतु
मार्कण्डेय: ब्राह्मादिपुविवाहेषु यातूढाकन्यकाभवेत् भर्तृगोत्रेण
कर्तव्या तस्या: पिंडोदकक्रिया आसुरादिविवाहेषु पितृगोत्रे-
णधर्मविदिति लौगाक्षि: मातामहस्यगोत्रेण मातु: पिंडोदक-
क्रिया कुर्वीतपुत्रिकापुत्र एवमाहप्रजापतिरिति पत्नीकर्तृक सा
पिंडेन विरोधआभातते लौगाक्षि. सर्वाभावेस्त्रिय:कुर्यु: स्वभर्तृणा
ममन्त्रकम सपिण्डीकरणंश्राद्ध मेकोद्दिष्टस्वपार्वण श्राद्धेषुमन्त्र-
वत्पत्नी कर्मकुर्याद्यथाविधि: तदौर्ध्वदेहिकेसाहि मन्त्रार्हाधर्मसं-
स्कृतेति अत्रविरोधेह्यमन्त्रककरण अधर्मविवाहोढाविषयं सम-
न्त्रककरणन्तु मन्त्रोढाविषयमितिव्यवस्था तथाचशातातप: धर्म-
विवाहेरूढाया सापत्नीपरिकीर्तिता सहाधिकारिणीस्त्रेषा यज्ञा-
दौधर्मकारिणी तथाच मन्त्रार्हाधर्मसंस्कृतेत्युक्त एतदानुज्ञाविषयं
नारीयात्वननुज्ञाता पित्राभर्त्रासुतनवा विफलन्तुभवेत्तस्या या-
करोत्यौर्ध्वदैहिकमित्यापस्तम्बोक्ते: तदभावेविशेषमाह कात्यायन:
असंस्कृतेनपत्न्याच ह्यग्निदानसमन्त्रकम् कर्तव्यतमितरत्सर्वं का-
रयेदन्यमेवहि तथा सर्वबन्धुविहीनस्य पत्नीकुर्यात्सपिण्डनं ऋत्वि-
जङ्कारयेद्वापि पुरोहितमथापिवेति पत्नीकर्तृत्वसाध्वीपरम्वा ।
अनुवाभ्रमनभर्त्तु. पालयन्तीव्रतेस्थिता पतिवद्याताप्यिड कृत्स्न

मर्थंहरेदपीति वचनादिति असंस्कृतोऽनुपनीतः सचकृतचूड-स्त्रिवर्षः तथाचसुमन्तुः श्राद्धंकुर्यादवश्यन्तु प्रमीतपितृकोद्विजः । व्रतस्थोवाव्रतस्थोवा एकएवभवेद्यदिइति यत्तुमनुनोक्तं नाभि-व्याहारयेद्ब्रह्म स्वधानिनयनादृते नह्यग्निन्युज्यतेकर्म बिनामौंजी निबन्धनादिति तदत्रिवर्षकृतचूडविषयं तथाचसुमन्तुः अनुपेत-स्तुकुर्वीतमन्त्रवत्पैतृमेधिकं । यद्यसौकृतचूडःस्याद्यदिस्यात्त्रिस-वत्सरः नाभिव्याहारयेद्ब्रह्मयावन्मौञ्जीनिवन्धनम् मन्त्राननु-पनीतोपि पठेदेवैकएवयइति तस्मात्त्रिवर्षकृतचूडः पित्रौर्ध्वदे-हिकम् मन्त्रवदेवकुर्वीतित्यलम्प्रसंगेन ॥

## सू० अतऊर्ध्वं संवत्सरे प्रेतायान्नंद-दाद्यस्मिन्वाहनिप्रेतःस्यात् ॥ ५ ॥

अतइति सपिंडनादूर्ध्वं वीप्सानिताअतआर्या प्रेतायेतैरक स्वं-विहितपार्वणव्यतिरिक्तविषयं अहःशब्दस्तिथिवचनः अन्नग्रहणं-मतिसम्भवे आमभ्युदासार्थं तेनचयाष्टपाकेनैवश्राद्धमितिज्ञापितम् अवश सपिण्डनादूर्ध्वंप्रेतशब्दोपादानात् द्वादशाब्दादौसपिण्डने-पि पुनर्मासिकावृत्तिज्ञापनार्थम् तथाचगोभिलः यस्यसंवत्सराद-र्वाग्विहितातुसपिण्डता विधिवत्तानिकुर्वीत पुनःश्राद्धानिषोड-शेति विधिवदितियथाधिकारं पार्वणैकोद्दिष्टविधिनेत्यर्थः तथाच-पैठीनसिः सपिण्डीकरणादूर्ध्वं यदाकुर्यात्तदापुनः प्रत्यब्दंयोय-थाकुर्यात्तथाकुर्यात्तदापुनः सपिण्डीकरणादूर्ध्वमित्युक्तं ततः प्रागेकोद्दिष्टविधिनेतिगम्यते सपिण्डीकरणादर्वाक् कुर्यात्श्राद्धा-निषोडश एकोद्दिष्टविधानेनकुर्यात् सर्वाणितानितिवचनात् जातूकर्ण्योपिपितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः प्रत्यब्दमिति

मासश्च विविर्द्धेयः सनातन इति पुनर्मासिककरणमाह कात्यायनः । सपिण्डीकरणादूर्ध्वम् नदद्यात्प्रतिमासिकं एकोद्दिष्टविधानेन कुर्यादित्याहगौतमः ,सपिण्डनादूर्ध्वमेकोद्दिष्टविधानेन प्रतिमासिकन्नदद्यात्किन्तुपार्वणविधानेनेतिकात्यायनमतं गौतममतेत्वेकोद्दिष्ट-विधानेनेति अयंव्यवस्थितोविकल्पः साग्निकः पार्वणविधिना निरग्निरेकोद्दिष्टविधिनेत्यर्थः तथाचजावालः असपिंडीकृतंप्रेतम् एकोद्दिष्टेनतर्पयेत् सपिण्डीकरणादूर्ध्वम् त्रिभिःसामान्यमिष्यते पुलस्त्योपि एकोद्दिष्टेनतेताव यावत्पित्रोःसपिण्डनं सपिंडीकरणादूर्ध्वं मेकोद्दिष्टन्निवर्त्तत इति साग्निकविषयमेतत् गौतममतोक्तमेकोद्दिष्टन्तु निरग्निविषयमित्यविरोधः शौनकोपि तदूर्ध्व मेकोद्दिष्टविधाने नदद्यादिति पार्वणत्वेविशेषमाह गौतमः अदेवंपार्वणश्राद्धं सोदकुम्भं ह्यधर्मकम् दद्यात्प्रत्याब्दिकश्राद्धं संकल्पविधिनान्वहं अधर्मकं दात्रभोक्तृधर्मवर्ज्जितं प्रत्याब्दिकश्राद्धात्पूर्वंसपिंडीकरणादूर्ध्वं मित्युक्तेः अत्रैतत्सन्दिह्यते सापिण्ड्यादूर्ध्वंमासिकेषु किंप्रेतशब्दस्यनिर्द्देशः उतपितृशब्दस्येति

तत्रैकआहुः सपिण्डीकरणादर्वा क्प्रेतशब्देनतंवदेत् तदूर्ध्वं प्रेतशब्देन शर्मशब्देन निर्द्दिशेदित्यनेनपितृशब्दइतिपन्थोत्याहुः पितृशब्दस्योच्चारणस्य मासिकादन्यश्राद्धविषयत्वात्प्रेतशब्दएव तथाच यस्यसंवत्सरादर्वाक्सपिण्डीकरणंभवेत् प्रेतत्वस्य पितृत्वञ्चभवेत्स्यधिरूपतेति मासिकेषु प्रेतत्व मष्टकादौपितृत्वमित्यर्थः अतोयद्ययुक्तलाद्याहं पार्वणत्वे ग्नौकरणमाह पाणौहुतन्तुनाश्नीयात् प्रतोद्देशेपुमर्वदा तद्धोमस्तुनवाकुर्यात् दश्नीयात्तुसपिण्डने ,अस्यार्थः प्रेतनाप्रेतोद्दे शेपुमासिकेषुमे ताग्न्याद्येयुद्देशेन पाणौहुतंनाश्नीयात् किन्त्वग्नौक्षिपेत् सपिण्डनेतु प्रेतश्राद्धत्वेपि हुतमश्नीयात्

तद्धोमश्चेनश्चेतिनिरग्निविषयं वाजसनेयकस्यार्थवत्वात् निरग्नेरे
कोद्दिष्टश्राद्धेऽग्नौ करणाभावइति तथाच कात्यायनः हस्तेहुतं-
यदश्नीया ब्राह्मणोज्ञानदुर्बलः नष्टभवतितच्छ्राद्ध मितिशाता
तपोऽब्रवीत् स्मृतिरपि पित्र्यश्चिप्रकरे होमः साग्नेरपिभवेदिष्टं अग्नौ-
करणशेषेऽपि पितृब्राह्मणभोजने लौकिकेऽग्नौक्षिपेदन्नं ग्र.हेष्वन्नं
करेहुतं पार्वणादौतदश्नीयादित्युक्तम् श्रीधरादिभिः पठन्तिच
साग्निकेमतुविप्रेण यदन्नं हूयतेकरे तदन्नं निक्षिपेदग्नौ भुक्त्वा-
चान्द्रायणञ्चरेदिति अथवासूत्रे प्रेतशब्दग्रहणं त्रिवर्षपर्यन्तमा-
ब्दिकश्राद्धस्याशुद्धत्वज्ञापनार्थं तथाचवृद्धयाज्ञवल्क्यः सपिण्डीक-
रणादूर्ध्वं यावदब्दत्रयं भवेत् तावदेवनभोक्तव्यं वर्जयित्वाब्द-
येऽहनि पठन्तिच एकादशाहमारभ्य यावदब्दत्रयम्भवेत् ताव-
च्छ्राद्धेनगृह्णीयादिति शातातपोऽब्रवीत् अत्रैकआहुः त्रिवर्षप-
र्यन्तंश्राद्धकृद्दे नकुर्यादिति प्रेतमशुद्धंश्राद्धं अत्रैकेप्रत्यवतिष्ठन्ते
आब्दिकेपादकृच्छ्रंस्या देकाहःपुन राब्दिके अतऊर्ध्वंमदोषः
स्यात् प्रमाणाभावात् वहि.श्राद्धं नकुर्वीतेति वचनाच्च पठन्तिच
त्रैवार्षिकश्राद्धे तस्या कृच्छ्रंतुचरयन् यथेतिवचनात् द्वैवार्षिक-
मेवाशुद्धमिति तन्नतत्वउक्तवचनविरोधात् किञ्चैतद्वचनम्प्रायश्चि-
त्ताभावं बोधयति नशुद्धत्वविदधाति वचनां तरविरोधात् भर-
द्वाजः प्राणायामत्रयंहत्वा षड्रात्रंसपिण्डनइति अतश्चसदाचा
रानुरोधा दाब्दिकेपादकृच्छ्रंस्यादित्येतद्वचनमेव व्याख्येयम्
आब्दिकेऊनाब्दिकानन्तरकर्तव्यमासिके, सपिण्डनेपुनरहोरात्र-
स्योक्तत्वात् पुनराब्दिकंसपिण्डनम् अतश्चवर्षान्ते मृताहएव
सपिण्डीकरणंकृत्वाब्दिकमितिक्रम. तथाचजाबालः पूर्णेसम्व
त्सरेहन्ते मृताहेपुनराब्दिके सपिण्डीकरणं कृत्वा कुर्यात्पुत्र-

त्सन्दिह्यते मासिकस्यमृताहेविहितत्वात् प्रथमासिकञ्च मृताहि-
स्या दुतैकादशाह इति तत्रै काआहुः आद्यमासिकमेकादशाहे द्वि-
तीयादिकन्तु प्रतिमासंमृताहमिति तथाचरेयुः प्रतिमासम्मृता-
हेषु: द्वादशैतानिवत्सरम् उत्कृष्यते हितत्सदांकुर्यां देकादशेन्हि-
तद्दिति अन्येत्वाहुः एकादशाहेश्राद्धद्वयम् कार्यमेकं प्रथममासि-
कत्वेनापरमेकादशाहिकत्वेनेति तन्नाद्रः प्रथमासिकस्य द्वादशा-
हादिकालेषुविहितत्वात् तथाचगोभिलः मरणात् द्वादशेन्हिस्या
न् मास्यूनेवोनमासिकमित्यादि नद्वितीयः नचैकादशाहश्राद्धमे-
व श्राद्धद्वयोपलब्धेः तयोरेकैकादशेन्हितन्नियमितत्वाच्च तथाचा-
त्रिः प्रेतार्थसूतकान्नेन ब्राह्मणान्भोजयेद्द्वश आद्यश्राद्धनिमित्तेन चै
कमेकादशेह्नीति एकादशेन्हिदशैकस्वेत्यन्वयः तथाप्रथमेन्हितृती
येच पञ्चमेसप्तमेपिच नवमैकादशेचैव तच्चश्राद्धमुच्यते तस्मान्नव
श्राद्धमाद्यं चैकादशाहेप्रथमासिकन्तु द्वादशाहादावितियुक्तम् तथा
चकात्यायिनि. ऊनान्यूनेषुमासेषु विषमेन्हिसमेपिवा तै पश्चिक-
न्त्रिपक्षेस्या न्मृताहेष्वितराणितु ॥ ऊनानीत्यूनमा सिकोनपाण्मा
सिकोनाब्दिकानि अपिचपठन्ति आद्यान्तेपश्चिकस्त्रै व ऊनयाण्मा-
सिकेपिवा अन्यानिमासिकानिस्युः स्वस्वकालेयथाविधीति आद्य
मूनमासिकम् प्रथममासिकमित्यर्थः एषांकालमाह गालव ऊन-
पाण्मासिकंषष्ठे मासन्यूने नमासिकम् वै पश्चिकन्त्रिपक्षेस्या दूना-
ब्दंद्वादशेतथेति एषांमृताहेष्वनियमइत्यर्थः तथाचक्रतुः श्राद्धए-
कादशेमासि तथाश्राद्धे तुपञ्चमे ऊनाब्दिकोन पक्षासौ भवेतांश्राद्ध-
कर्मणीति पक्षान्तरमाहगौतम. एकद्वित्रिदिनैर्न्यूनैः त्रिभागेनोनएव
बा श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याहगौतम.एकद्वित्रिदिनैर्न्यून
इति ऊनमित्रंशत्यष्टाविंशति सप्तविंशतिदिनेषु क्रमेणोनाब्दिकानया

इत्यावसथिक श्रीमद्रतिसुखात्मज श्रीविष्णुमिश्रात्मजन्मनः ।
कृष्णमिश्रस्य कृतौ श्राद्धकाशिकायांसूत्रवृत्तौ ।
सपिण्डीकरणप्रकरणम् ॥

इत्थं पार्वणैकोद्दिष्टसपिण्डनश्राद्धेष्वपादक्षिणादि धर्मानुपदिश्येदानींरङ्गीभूत्वेन तद्विपरीतप्रदक्षिणादिधर्मा नृपतिपादयिपुराभ्युदयिकश्राद्धमारभते ॥

## मू० आभ्युदयिके प्रदक्षिणमुपचारः ॥१॥

अभ्युदयइष्टापूर्त्तादुत्सवकाले सत्क्रियतइत्याभ्युदयिकम् गेषिकठञ् प्रदक्षिणमिति विशिष्टविधिः उपचारःकरणम् सर्वश्राद्धे सर्वमनुष्ठानम् प्रदक्षिणमथतोऽस्यार्थः अभ्युदयोवृद्धिः इत्यनर्थान्तरम ॥ तथा अग्न्याधानाभिषेकेष्टा विष्टापूर्त्तेस्त्रियाकृतौ वृद्धिश्राद्धम्प्रकुर्वीत श्राश्रमग्रहणेतथेति छन्दोगार्थ वचनात् आदिशब्दः-पुत्रजन्मविवाहाद्यर्थः तथाचसएव पुत्रोत्पत्तिर्प्रतिष्ठासु तन्मौंजीत्यागबन्धने चूडायांचविवाहेषु वृद्धिश्राद्धं विधीयतइति ननुच नान्दीमुखङ्कर्माङ्गञ्चेति संज्ञाभेदात्कथमाभ्युदयिकम् वृद्धिश्राद्धमित्युच्यते वृद्धिश्राद्धएवनान्दीमुखमिति संज्ञाभेदःप्रयोग विशेषणार्थः तथा वशिष्ठवसिष्ठः पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् तन्नान्दीमुखमितिविशेषः समुदाहृतइति यत्तु कर्माङ्गमितितं ज्ञान्तरं तदपिवृद्धिधर्मातिदेशेन तत्तद्रूपमेवसंज्ञाभेदेपीत्यविरोधः तथाच पारस्करः । निषेककालेसोमेच सीमन्तोन्नयनेतथा ज्ञेयंपुंसवनेश्राद्धङ्कर्माङ्गं वृद्धिवत्कृतं लौगाक्षिरपि नामान्नचौलगोदान सोमोपनयपुंसवे स्नानशनविवाहेषु नान्दीश्राद्धंविधीयतइति अत्राभ्युदयिकइति वदतामाहृत्यापनाद्यंगेषु प्रागुदक्संस्थतैवोक्ता देवकृत्य

स्यादितिगम्यते अतएवप्राधान्यस्य कर्तृ मदर्कसंस्थतायामप्राप्तचि-
श्यमपि स्यादित्याहुः तत्रापि प्राप्तचिश्यमेवेत्यु दग्धस्यैव कर्तृत्व-
मित्यन्ये अनानूचानाःप्रमाणम् अवैतच्चिन्त्यते किंपत्रिश्राद्धन्दिन-
त्रये कार्यमुतैकदिनएवेति तत्रैकआहुः एकस्मिन्कर्माहएवेति
मातृभ्यःप्रथमन्दद्यात्पितृभ्यस्तदनन्तरं ततोमातामहेभ्यश्च दशैश्रा-
द्धत्रयंस्मृतमितिवचनादिति तदयुक्तं अस्यापिपरदिनविधायकत्वं
प्रतिभानात् तथाचस्मृतिः मातृश्राद्धन्तुपूर्वेद्युः कर्माहन्येवपैतृकम्
मातामहस्योत्तरेद्युर्वृद्धौश्राद्धत्रयञ्चरेत् वसिष्ठोपि पूर्वेद्युर्मातृकंश्राद्धं
कर्माहम्पैतृकन्तथा उत्तरेद्युःप्रकुर्वीतमातामहगणस्यत्विति नन्वेक
दिनकरणन्दिनत्रयाशक्तौ कर्माहेवेदितव्यमितिचेत् तदपिन तत्र-
पिपूर्वेद्युरेव विहितत्वात् तथाच पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्व-
वासरे श्राद्धत्रयंप्रकुर्वीतवैश्वदेवन्तु तान्त्रिकमिति तान्त्रिकमि-
त्येकदिने विशिष्टविधिः ब्रह्ममनुरपि अत्रामेभिन्नकालानां नांदी-
श्राद्धत्रयम्बुधः पूर्वेद्युरेवकर्तव्य म्पूर्वाह्णेमातृपूर्वकमिति यत्वेक-
दिनएवाचरन्ति तद्वचनादर्शननिबन्धनमित्यवधेयं जातकर्मादि-
विषयम् वेत्यविरोधः पठन्तिच पुंसवनेच सीमन्तेत्यन्न चौलोपना-
यने गोदानेस्नानउद्वाहे नांदीश्राद्धम्पुरोदितइति अत्यविहितेषु
पूर्वेद्युरेवेति तत्र अकृत्वामातृयागन्तुयः श्राद्धम्परिवेषयेत् तस्य-
क्रोधसमाविष्टाहिंसामिच्छन्ति मातरइत्यादिवचना न्मातृपूजनस्य
श्राद्धे पूर्वभावित्वात्सत्पूजने विकल्पानीचवाक्यानि दृश्यन्ते अतःकात्या-
यनपरिशिष्टम् गौरीपद्माशचीमेधा सावित्रीविजयाजया देवसेना-
स्वधा स्वाहामातरोलोकमातरः धृति.पुष्टिस्तथातुष्टिरात्म देवतया
सह गणेशेनाधिकाह्येताष्टद्धौ पूज्याश्चतुर्दशेति चतुर्विंशतिमते -
ब्राह्म्याद्याद्दिसथामध्य दुर्गाचेत्रगणाधिपः वृद्धौहद्वौसदापूज्याः

पश्चान्नांदीमुखान्पितॄन् ब्राह्मीमाहेश्वरी चैवकौमारी वैष्णवीतथा वाराहीचतथेन्द्रीच चामुण्डादेव्यमातरः तिस्रःपूज्याःपितुः पक्षेतिस्रोमातामहेतथा। इत्येतामातरःप्रोक्ताः पितृमातृत्र्यसाष्टमीति अत्रयथाशाखंयथा जातिकुलम्वाव्यवस्थेत्यविरोधः तथाच चतुर्विंशतिमते श्राद्धभाभ्युदयेप्राप्ते देवतास्थापनस्मृतम्। जातिधर्मकुलश्रेणिलोकानां हितकारकमिति तत्रमाध्यन्दिनशाखायामनुक्तत्वात्किञ्छन्दोगोक्तम् कार्यमुतान्यकृत्युक्तमिति सन्देहः तत्रकेचित्तुः परोक्तत्वात्तत्किञ्चिदिच्छन्तीति तथाचसंग्रहकारः सर्वेषामपि पद्मानांस्वगृह्योक्तंविधीयते स्वगृह्योक्तस्यचाभावेगृह्यान्तरस्वेच्छयाभवेदिति तदयुक्तं सूत्रपरिशिष्टयोरेककर्तृत्वात्तस्यान्यशाखविषयत्वात्पारस्करमतस्याश्रयणीयत्वाच्च तथाच स्मृतिसंग्रहः। नष्टेहाद्रिस्मृतिर्येषां श्राद्धादावुपलभ्यते कर्तुमर्हन्तितेसर्वेपारस्करमुनीरितमिति परेषांकरोतीतिविव्युत्पत्तेः अतश्चगौर्यादयएवात्रशाखायामितितत्प्रकारमाह ॥ सप्तप्रतिमासुचमुद्रासुलिखित्वावापटादिषु अपिचाचतपुञ्जे पुनेवदेयपृथग्विधैरिति मुद्राहुरजतादिधातुमयीपुञ्जतपुञ्जाः यवमुष्टयः यथासम्भवयथाकुलञ्च विकल्पः व्यवस्थितविकल्पोवा जातकर्मणिवालानांनामान्न यन कर्मणि निरीक्षणेप्राशने च व्यवस्थंमातृपूजनमितिवचनात्। अतएवपृथग्विधैरित्युक्तं गन्धताम्बूलवस्त्रादिभिश्चशब्दार्थः तथा कुड्यलग्नावसोर्धारासप्तधाराघृतेनतु कारयेत्पञ्चधारांवानातिनीचान चोच्छ्रितां कारयेदितिस्वार्थेणिचस्वकर्तृत्वान्नियमार्थीवा तैननातिनीचांनचोच्छ्रितामितिमातृसंमितामेव नतासामञ्जर्ध्वत्वाधिकमित्यर्थः कालमाह ॥

## मू॰ पूर्वाह्णे ॥ २ ॥

श्राद्धं कुर्यादिति शेषः एतद्वचनं दैवधर्मोपलक्षणार्थं तेनोपवीति प्राङ्मुखदक्षिणजान्वाचतदेवतीर्थप्रागुदकसंस्थनमस्कारादिदैवधर्मं सर्वोऽपि प्राप्नोतीत्यर्थः। तथाच प्रचेताः अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणं प्राङ्मुखो देवतीर्थेन चैवमस्तु व्यवसर्जनम् दक्षिणं पातयेज्जानु देवान्परिचरन्सदा निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् यज्ञोपवीती देवानां तथाऽऽहुरपि पितॄनपि दृश्यश्चैते सर्वदैः प्राङ्मुखोदङ्मुखोऽपि वा तथा पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकं एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति दैविकं श्राद्धादश्यादिषु वैष्णवं तथाच विश्वामित्रः देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः इति ननु च प्रातर्वृद्धिनिमित्तकमित्यनेकस्मृत्या प्रातरेवाभ्युदयिकस्य विहितत्वात्कथं पूर्वाह्ण इति उच्यते प्रातःशब्देन पूर्वाह्णस्यैवोक्तत्वादिति वक्ष्यमाणत्वात् एवञ्च सति पूर्वाह्णः किन्तु द्वेधा विभक्तोऽह्नि ग्राह्यः किं वा त्रेधा विभक्त उत चतुर्धाविभागाश्रभूतत्वात् उच्यते दैवमानुषपित्र्यकालापेक्षया त्रिभागो विश्वे त्रिधाविभाग एव ग्राह्य इत्यदोषः तथाच श्रुतिः पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणां अपराह्णः पितॄणामिति नन्वेवमपि श्रुतिरेव पुनराह पूर्वाह्णो देवानां अपराह्णः पितर इति द्विधैवाह तत् कथं त्रिधाविभाग एवेति नैवं सामान्येनास्याः श्रुतेराभ्युदयिकान्यपितृविषयत्वात् यत्तु पितॄनप्यत्र दैववदित्यतिदेशेन प्राप्तावर्त्तनादह्नः कालं विद्यादिति गोभिलसूत्रे यच्च द्विधाविभागेन मध्याह्नोऽभिहितः स पाकयज्ञादिदैवकर्मविषयः अन्यथापराह्णे पाकयज्ञासंभवात्। तस्मात्त्रिधाविभाग एव ग्राह्य इत्यदोषः तथाच श्रुतिः पूर्वा-

त्रीर्वैदेवानां मध्यन्दिनइति सिद्धम् तथाचगार्ग्यः ललाटसमिते भानौप्रथमः प्रहरः स्मृतः सएवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते अध्यर्धमधिकार्धं सार्धप्रहरइत्यर्थः। अन्वाधानाभ्युदयिकेतु गालवः। पार्वणश्चापराह्णेतु वृद्धिश्राद्धंतथाग्निकमिति। अन्वाधान निमित्तमपराह्णइत्यर्थः।

## मू० पितृमन्त्रवर्जंजपः॥ ३॥

मधुमतीपितृसहितयोरुपलक्षणञ्चैतत्। तथाचमनुकात्यायनौ मधुव्वाताजपस्थानेकुर्यात्तत्प्रयत्नतः। उपास्मैगायतेत्यादिकृचः पञ्चजनेत्तथा मधुमध्विति यस्त्वत्रनिर्जपोमितुमिच्छताम्। गायत्र्यानन्तरं सोमधुमन्त्रविवर्जितः। नचाग्रेत्सुजपेद्दत्र कदाचित्पितृसंहितां अन्यएवजपःकार्यः सोमसामादिकं शुभमिति। पित्र्यमन्त्राचशृत्सुजपे दित्यत्रोक्ताः तान्वर्जयित्वाजपः कर्त्तव्यइत्यर्थः। अत्रजपत्वाविशेषा दुशन्तस्त्वाऽयं तुनइत्यादीनामपि प्रतिषेधइति केचित्। आवाहनार्थत्वादनयोर्न प्रतिषेधइत्यन्ये एवञ्चपतिब्राह्मणानामग्निस्थानीयत्वात्तच्छरीर वर्त्तिपित्रावाहनस्य मन्त्रेणैवोचितत्वाच्च विधिरेवयुक्तःप्रतिभाति। अन्यथामन्त्रवत्क्रियमाणानाममन्त्रकत्वेन निष्फलत्वापत्तेः। अत्रैतच्चिन्त्यते किंवस्वादिप्रयोगः प्रकर्त्तव्यउतनेति। अत्रशेषंपार्वणवदित्यति देशेनप्राप्नोतीति। तदयुक्तम् पितॄणामप्यतदेयरूपत्वात्। तथाचस्मृतिः पितॄणांरूपमास्थाय देवाअन्नमदन्तिते तस्मात्तस्येन दातव्यं हविर्पूर्वपुदाहृभिः नांदीमुखेतिप्रयोगस्य तत्प्रतिनिधिरूपत्वाच्च। तथाचोक्तं तत्रनांदीमुखमिति विशेषः समुदाहृतः अपिच चतुर्विंशतिमतम् नांदीमुखमितिविशेषः सम्पादितोनान्यइत्यर्थः।

## ऋजवो दर्भाः ॥ ४ ॥

दर्भशब्दोऽत्र दूर्वादि द्रव्योपलक्षको नसमूलत्वज्ञापकः तेनाऽ-दूर्वासाक्षयादि मूलाऋजुदर्भाभवन्तीत्यर्थः। तथाचपुराणसमुच्चये दधिदूर्वाक्षतमधु बदराक्षतमिश्रितैः अनुलेपनगन्धादि रक्तसूत्र मन्यते छन्दसिष्टोपि अपसव्यञ्जानुपातमन्त्रं मांसक्षयारिजम् एवंविवर्जयेद्दर्भा न्समूलांश्चतिलानपीति गृह्यपरिशिष्टेपि युग्मा-म्ब्राह्मणाश्च मूलादर्भाइति। तथैतत्संदिश्यते किंष्टवृद्धिश्राद्धमदैवतं स्यादुतसदैवतमिति उभयथापिस्मृति दर्शनात्। तथाहि वृद्ध-श्चैतेषु युग्मांस्तुभोजयेद्ब्राह्मणांच्छुचिः प्रदक्षिणन्तु सर्व्वे नमदद्या द्दैवपूर्वकमिति। मार्कण्डेयोपि वैश्वदेवविहीनन्त्वकेचिदिच्छन्ति सूरयइति। तदाभ्युदयिकं तत्रैकचाहुः यथाशास्त्रंव्यवस्थेति। एवञ्चसतितत्रापिकिंव्यास्थयेपि विशेषणार्हेयतविकल्पः किंवाऽश्रा-द्धविशेषइति सन्देहः अविशेषेणैवश्राद्धत्रयेपीत्येके तदस्तदं श्राद्धवि-शेषपर्दैवस्य विकल्पितत्वात्। तथाचशातातपः नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैवच मातृश्राद्धन्तु युग्मैःस्याददैवं स्याद्गुणैःपृथक् कृत्स्नमित्यर्थः। आचारतिलकेपि पितरोन्वष्टकाश्राद्धमाराभुक्तेसदै-वताम् श्राद्धमदैवतंमाता पितरश्च सदैवतमिति तस्मान्मातृश्राद्धएव दैवतविकल्पइति सिद्धं तथाच अन्वष्टकावृद्धिश्च तत्रतोभयत्र सदैवतं ताभ्यान्त्वदैवतं इहोक्तिभार्यैवसदैवतमिति यत्तु विप्रावे-दितविचनं तत् श्राद्धदैवत्यापिपाश्चनपदैवत्यं ह्युपपद्यतइ-तिविरोधः॥

## सू० यवैस्तिलार्थाः ॥ ५ ॥

(१) अयं प्रयोगमंत्रतिभि प्रापश्चाद्यैतत् तेनयवैस्तिलमन्तीति-

---

(१) अवदानार्थास्तिलास्तावद्यवैर्दर्भैरेवर्ण ॥

धिर्ययातथास्वधादिपदेषु स्वाहादिपदानिप्रतिनिधातव्यामीत्य-र्थः तथाचेश्वरः कुर्यात्स्वाहास्वधाभ्यामे वाचमेप्रीयतामिति इ-ष्टिश्राद्धेषुसर्वत्रनमोमेस्तविरिष्यतइति । नचयवैस्तिलार्थाइति यद-तीयवचेपमत्रोपिपितृष ऐषु स्यादित्युक्तं तिलार्थस्यैवयवैरूप दिष्ट-त्वान्मन्त्रस्यैत तिलोसीति प्रत्यक्षविरुद्धत्वाच्च चतश्चतिलोसीति-स्थानेयवयवोसीत्यादि मदपृथेयःपितपात्वेष्वपीतितथाचाश्वलायनः यवोसिसोमदेवत्यो गोसवोदेवनिर्मितः प्रत्नमद्भिःपृक्तःपुष्ट्यानांदीमु-खांल्लोकान्प्रीणाहिनःस्वाहेति पुराणसमुच्चयेपि यस्मात्कृदत्तकु-र्वीत श्राद्धे नान्दीमुखेक्वचिदिति यत्रैवेष्टिश्राद्धे पितृपात्रंन्युब्ज-मित्याज्ञस्तद्विशेषवचनानवलोकनात् बन्धनमितृप्रेक्षणीयं तथाचे-श्वरः अपसव्यं पित्र्यमंत्राणामजानुनिपातनम् सुरर्जपात्रकर्त्त-व्यं इष्टिश्राद्धेषुसर्वदा वसिष्ठोपि दत्वापिण्डान्प्रकुर्वीत पिण्डपात्र-मधोमुखमिति तथा ;गुडेधूपःप्रयत्नेनपुष्पाण्येवोत्तमा निषइति ॥

## मू० सम्पन्नमितितृप्तिप्रश्नः सुसम्पन्न-मितीतरेब्रूयुः ॥ ६ ॥

तृप्तास्थ्येत्यत्रसंपन्नमितिवदेदित्यर्थः (१) साकांक्षत्वात्सुसंपन्नमि-तिप्रतिवचनम् एतच्चपाकश्राद्धएवनामान्ने तत्रैतदसम्भवात् त-थाच आमश्राद्धमनंगुष्ठ मग्नौ करणवर्जितम् तृप्तिप्रश्नविहीनन्तुक-र्त्तव्यंमानवैर्भुवामिति विहितस्वविकल्पे नामश्राद्धम् तथाचहक्ष-याज्ञवल्क्यः आमश्राद्धंप्रकर्त्तव्यं ह्यहोनान्दीमुखेसदा पाकेनवाच-हिःशालैः मधुरक्षदरंदधीति चवयथाकुलयथासम्भवंवाविकल्पः अत्रैतच्चिन्त्यते किमामश्राद्धे पिण्डदानमामे कार्यमुतपाकेनेति तत्रैकआहुः आमश्राद्धंयदाकुर्या । द्विधिज्ञः श्राद्धदस्तदा तेना ।

(१) इसम्पन्नमितिप्रोक्तशेअमवविवेदयेत् ॥

ग्नौकरणंकुर्यात्पिण्डांस्तेनैव निर्वपेत्। दद्याद्विद्विजातिभ्यः। शृतस्याग्रदिवाशृतं तेनाग्नौकरणंकुर्यात्पिण्डांस्तेनैवनिर्वपेत्इति मत्स्यपुराणव्यासवचनाभ्यां मासेनविहितत्वादामेनैवेति। तद-युक्तं मासश्राद्धं यदाकुर्यात्पिण्डदानद्वयम्भवेत्। गृहपाकात्समु द्धृत्य सक्तुभिःपायसेनवेति पाकेनविहितत्वात् एवन्तर्हि विक-ल्पोऽस्त्विति अव्यवस्थासंभवे ऽष्टदोषदुष्टत्वात्। तस्मात्तर्हि अकर्तृ-केपाकेन शूद्रकर्तृक आमेनैतिव्यवस्थोत्पद्येत तन्नातीवशोभते। साग्निनिरग्न्योर्विषया व्यवस्थोपपत्तेः तस्मात्साग्नेः पाकेनाग्नौ करणं पिण्डौ निरग्नेरामान्नेनेतिव्यवस्था अथवा यथाकुलमिति। यत्र आमेनपिण्डांदद्याद्यो विप्रान्पक्वेनभोजयेत्। पक्वे नकुरुतेपि-ण्डान्विप्रेभ्यामं प्रयच्छति तावुभौमनुनाप्रोक्तौ नरकार्हौनसंशयः तस्माद्विपर्ययंविद्वान्नकुर्याच्छ्राद्धकर्मणीति तच्छ्राद्धान्तरविषयं॥

## मू॰ दधिबदराक्षतमिश्राःपिण्डाः॥७॥

अक्षतायवा, मिश्रणं मिश्रः दध्यादिभिर्मिश्रितोदनेन पिण्डा-देयाइत्यर्थः। बहुव्रीह्युपलब्धेः अन्ये त्वाहुः दध्यादित्रयमेव मेल-यित्वादेयाइति तदयुक्तम् शाल्यन्नस्यविहितत्वात् तथाचांगिरा.शा ल्यन्नं मधुसंयुक्तं बदराणियवास्तथा मिश्राणिकृत्वाचत्वारि पिण्डा (१) न्श्रीफलसंमितान् दद्यादिति कात्यायनोपि सर्वस्मादन्नमुद्-धृत्य व्यञ्जनैरुपसिच्यच संयोज्ययवकर्कन्धु दधिभिःप्राङ्मुखस्तलइति पिण्डयज्ञामपिण्डव्युदासार्थं एतच्च साग्निविषयं तथाचनिगमः आहिताग्नेःपित्रर्चनं पिण्डैरेवेति स्मृतिरपि योग्नौतुविद्यमानो-ऽपि व्रीहीपिण्डान्ननिर्वपेत् पतन्तिपितरस्तस्य नरकेमतुपच्यतइति यत्तु पिण्डनिर्वपणाद्वर्ज्यान् नवाकुर्यान्नराधिपेति भविष्यवचनं।

(१) श्रीफलंबिल्वम्॥

यच्च वृद्धिश्राद्धे निकल्पेन पिण्डदानं बुधैः स्मृतमितिवचनं तन्निरग्निविषयं तथा च यावन्नाग्निसम्बन्धः उत्पन्नाग्निस्तथैव च तावद्वृद्धिषु सर्वासु कल्पश्राद्धमपिण्डकं अत्रविशेषः पिण्डहीनेपिकर्तव्यम् विकरम्यावपूरण अग्नौकरणमर्ध्ये त्वेतच्छ्राद्धे चतुष्टयं वर्जनेपिण्डहीनेपि सर्वमर्घादिकम्भवेत् कुर्यात्श्राद्धर्धाकुर्यात् ब्रिपेदन्नौजलेमिवेति यत्तु मङ्कल्पन्तुयदाकुर्यां न्नकुर्यात्पात्रपूरणं मित्यादितत्श्राद्धान्तरविषय अपिण्डकन्तथादेशकुलाचारविषयञ्च वृद्धिश्राद्धे कुलाचार देशकालाद्यपेक्षणीति भविष्यद्वाक्ययोगात् अत्रचिंत्यते किमवाश्नेजन मुदकेनदेयमुतान्यद्रव्ये णेति तत्रैकआहुः तत्पात्रक्षालनेनाथपुनरप्यवनेजयेदित्यनेन पिण्डपात्रक्षालनजलेनैवेतिमन्येआहुः क्षालनोदकस्य छन्दोगविषयत्वात् उदकेनैवेति तदुभयमपि विशेषवचनानुपलब्धि निबन्धनमित्यवधेयं क्षालनोदकस्य प्रत्यवनेजनविषयत्वात् क्षीरेणविशिष्टविधानाच्चेति तथाच प्राङ्मुखस्त्वथदर्भेषु दद्यात्क्षीराद्यवनेजनं दधिवदरयवमधुयुतांश्रीफलसन्निभं तथाचार्घोदकस्थाने दद्यात्क्षीरयवोदकमितिब्रह्मपुराणवचनात् अतश्चक्षीरेणैवेति पुनश्चिंत्यते पिण्डदानमपि किन्देवतीर्थेनाहोस्वित् प्राजापत्येनेति तत्रैकआहुः दध्यक्षतैः सवद्रैः प्राङ्मुखोदङ्मुखोपिवा देवतीर्थेनवैपिण्डान्दद्यात्कायेनवान्पे श्यनेनोभयतीर्थस्य विहितत्वाद्विकल्पएवेति । अन्येत्वाहुः । छन्दोगादेवतीर्थेन वाजसनेयिप्रभृतयः प्राजापत्येनेति तथाच मार्कण्डेयः नान्दीमुखानांकुर्वीत प्राज्ञ.पिण्डोदकक्रियाः प्राजापत्येन तीर्थेन यच्चकिञ्चित्प्रजापतेरिति अत्रानूचानाः प्रमाण पिण्डोदकव्यतिरिक्तं देवतीर्थेनपिण्डोदकम् प्राजापत्येनेतिव्यवस्थाया अत्रविशेषमाह स्मृतिः । षड्मातृकपुत्रेषु

मार्ध्वमष्टकादिषु सर्वासांनामसंकीर्त्य पिण्डमेकंसनिर्वपेत्।
पुराणसमुच्चये एकस्यबह्वोभार्या एकपुत्रस्तथायदि एकेनापि-
सुताया: सर्वासांपिण्ड:स्मृत: बह्वीनामेकपत्नीना मेकाचेत्पु-
त्रिणीभवेत् तेनपुत्रेणपुत्रिण्य: सर्वास्तामनुरब्रवीत्इति अत्र तत्सं-
दिह्यते किमर्घदानेपिण्डप्रदेशत्र्मिं स्वर्वनानोद्देय: किंवापृथग-
र्घोइति तत्रैकेयाहु: अर्घस्यपिण्डवद्विधानमेवेति तदयुक्तं अर्घ-
दानस्यपत्नीनं।प्रदेशात् तथाचगालव: अनेकमातरोयस्य श्राद्धेचा-
परपाक्षिके अर्घदानंपृथक्कुर्यात्पिण्डमेकन्तुनिर्वपेदिति अप-
रपाक्षिकइतिश्राद्धान्तरोपलक्षणम् अत्रैके दाक्षिणात्याष्टद्धिश्रा-
द्धेषु प्रपितामहमारभ्यार्वाचीनम् पिण्डदानादिप्रयोगमाचरन्ति-
नान्दीमुखेविवाहेच प्रपितामहपूर्वकम् वाक्यंसमुच्चरेद्विद्वा नन्य-
त्रपितृपूर्वकमितिवचनादिति तदनुचितम् नान्दीमुखा:पितर:पि-
तामहा:प्रपितामहा:प्रीयंतामित्यादिप्रयोगस्यकात्यायनेनपितृप्रभृ-
तम्युत्तरोत्तरक्रमेणाभिहितत्वात् श्राद्धपरिशिष्टे उत्तरोत्तरदानेन
पिण्डानामुत्तरोत्तर: । भवेदधश्चाधरत्मा माधार: श्राद्धकर्मणि
तस्माच्छ्राद्धे पुमर्वेषु वृद्धिमत्स्वितरेषुच मूलमध्याग्रदेशेषु ईषत्स-
क्तांश्चनिर्वपेदिति उत्तरोत्तर: पुत्रपौत्रादिभि: समृद्धय:अधराणाम-
ग्रमध्यमूलक्रमेणाधोदानेनाधारा: ।पुत्रादिभिर्हीनोभवेदित्यर्थ: त-
स्मादनुयाख्याया तन्नोचितमिति यत्तु नान्दीमुखेविवाहेचेति व-
चनन्तदन्यशाखिविषयम् देशकुलधर्मादिविषयन्त्वविरोध: अत्रै-
तच्चिन्त्यते वेदिकायां लेखात्रयम् पिण्डदानञ्च किमुदक्संस्थं क-
र्त्तव्यमुतदक्षिणासंस्थमिति तत्रैकआहु: अपदक्षिणत्वेपि स्व-
शाखादेनिकत्वा दुदक्संस्थमेवेति तदयुक्तम् श्राद्धदयिके प्रद-
क्षिणमुपचारइतिविरोधाच्च नचोदक्संस्थतायाम् प्रमाणमुपल-

अन्दक्षिणासंस्थत्वेच पूर्वदक्षिणप्रमाणमस्त्विति तथाहदक्षिणासं-
स्थमेव रेखायांपिण्डदानादि तथाचकात्यायनएव द्वितीयन्तृ-
तीयञ्च मध्यदक्षिणप्रदेशयोः मातामहादिप्रभृतीन् एतेषामेववाम-
तइति एतेषांपितृादित्रयाणाम् वामतइत्यन्वयः ततपित्रादीनां-
मधेर यत्वेनसम्बोधनत्वेनच स्वसंमुखत्वाद्दक्षिणासंस्थत्वेनतेषांवा-
मता यस्वस्थादित्वेन पिण्डानामन्ययाभावाद्वामतायां कर्तृगतो-
पयवइत्यतइतुरत्तम तदसङ्गत एतेषामेववामत इत्येतच्छब्देन पि-
त्रादीनामपरामृष्टत्वात् कर्त्तुरवयवत्वेतु एषामितिचबहुत्वविरोधा-
च्च तस्माद्दक्षिणासंस्थत्वेनैतद्वामतासम्भवः स्त्रवायैस्तदयाज्ञव-
ल्क्यः कोनक्षत्तरिवामांगे मते नर्णारिदक्षिणइति अपिचस्मृत्यंतरं
श्राद्धे सदैववामाङ्गे पत्नीनाम् दर्शयेत् वृद्धिश्राद्धे पुनारीणां दक्षि-
णांगेसदाभवेदिति श्राद्धे सदैववामांग इत्येतदापस्तंबादिविषयं
तेषाम्पित्रादिपिण्डपश्चिमतश्चपत्नी पिण्डविधानात् तथाचापस्तंब-
गृह्यं ॥ द्विधाभूतं यथाभवति तथासदक्षिणाग्रान् दर्भानुल्लिखित
देशेसंस्तीर्य तत्रपूर्वभागेपित्रादि वर्गार्थंस्तरणं पश्चाद्भागेतु माता-
दिवर्गार्थमिति स्त्रीभ्यश्चपिण्डाइत्यपश्चिमाःस्युः इतितद्भाष्या-
र्थसंग्रहकारः वृद्धिश्राद्धे पुनारीणां दक्षिणांगंसदाभवेत् इतितुसर्व-
विषयं तस्मान्द्रेखापिण्डदानादिकम् प्राङ्मुखकर्तृदक्षिणासंस्थ-
मेववृद्धिश्राद्धेषु सर्वत्रकर्तव्यमितिसर्वमनवद्यम् ब्राह्मणनिवेशनायैव
प्रागारभ्य पश्चात्संस्थमेवेति ॥

## मू० नान्दीमुखान्पितॄनावाहयिष्यऽइति पृच्छत्यावाहयेत्यनुज्ञातो ॥ ८ ॥

लिङर्थेलट् पार्वे तद्वृत्तान्यं किम्पित्रादिविकास नांदीमुखत्वं
प्राप्तोस्वित् वृद्धप्रपितामहादिविकम्येति स्मृतिप्रभययादर्शनात्।

तथाचब्रह्मपुराणम् पितापितामहश्चैवतथैवप्रपितामहः त्रयोह्यश्रुमुखाएते पितरःपरिकीर्तिताः तेभ्यःपूर्वतराश्चेच प्रजावन्तः सुखैषिणः तेतुनान्दीमुखानान्दी समृद्धिरितिकथ्यते प्रसन्नमुखसंसर्गान्मङ्गलीयांस्ततस्तुतइति । तत्तश्चवृद्धप्रपितामहादिमुखत्वेनाश्रुदयिकत्वंप्राप्नोति अथवा पितापितामहश्चैव तथैवप्रपितामहः ॥ पिण्डसंबन्धिनोह्येते पितरः परिकीर्तिता इत्यादिवचनैरश्रुमुखानामेव पिण्डसम्बन्धित्वात् पित्रादित्रिकस्यापि नांदीमुखत्वमिति तथाचसूत्रम् ॥ नांदीमुखाः पितरःपितामहाःप्रपितामहाइति मार्कण्डेयोपि येस्युःपितामहादूर्ध्वं तेस्युर्नान्दीमुखाअपीति प्रपितामहस्यापि नान्दीमुखत्वं वृद्धादित्रिकस्यैवेति एवंचसतुभयेषामपि नांदीमुखत्वमविरुद्धम् यत्त्वाश्रुमुखादिमंत्राकीर्त्तनन्तत्कारणपरम् प्रसन्नमुखसंसर्गादित्यादिना नान्दीमुखाःवंशवृद्धिमीहन्ते अश्रुमुखास्तुपिण्डदानसमर्थाः सन्ततिमितिबोध्येनिरूपितत्व त् तस्माज्जीवत्पितृमातृमातामहादिकस्य कर्तुरधिकारार्थं वृद्धप्रपितामहादिकस्य नान्दीमुखत्वप्रकीर्त्तनं मृतपितृमातृमातामहादिकस्य कर्तुरधिकारार्थं अश्रुमुखानांनांदीमुखत्वमितिव्यवस्थयैवाविरोधः तथाच चतुर्विंशतिमतम् नांदीमुखेविधावाद्यौ प्रपितामहपूर्वकम् । वाक्यं समुच्चरेद्विद्वानन्यत्रपितृपूर्वकं जीवत्पितृकःप्रपितामहपूर्वकं मन्त्रवमृतपितृकः पितृपूर्वकमित्यर्थः दाक्षिणात्यास्तुप्रपितामह पितामहपितरितिक्रमद्वयमेतदित्याहुः कात्यायनोपि जीवन्तमतिदद्याद्वा प्रेतायान्नोदकेद्विजः पितुःपितृभ्योवादद्यात्सपितेत्यपराश्रुतिः ब्राह्मेपि उक्तमादायपिण्डंतु कृत्वाबिल्वप्रमाणकं दद्यात्पितामहादिभ्यो दर्भमूलेयथाक्रममिति पठन्तिच जनन्यांविद्यमानायाम् यजेदासुपितामहीं मातृप्रःसर्वविज्ञेयो वृद्धिश्राद्धेतुकाचिदिति यत्तुजीव-

वतिपवादिर्मन्त्रलिङ्गस्यापि इत्थियाद्धे धिकारइतिसिद्धम् अतएक-
आहुः पितृमातृमातामहानांमध्ये योजीवतितद्वर्गंपरित्यज्य पा-
र्वणद्वयमेकंवा यथासम्भवङ्कर्त्तव्यं त्रिषुजीवत्सु मातृपूजनमेव-
नश्राद्धमिति तथाच पितृवर्गेमातृवर्गे तथामातामहस्यच जीवेत्त-
यदिवर्गादौ तद्वर्गन्तुपरित्यजेत् इति तथाच सपितुःपितृकृत्येषु
अधिकारोनविद्यते नजीवन्तमति क्रम्य किञ्चिद्दद्यादितिश्रुतिः
तथा पिण्डजीवत्पितुर्नास्ति मग्नौहोमोपिपाक्षिकः नजीवन्तम-
तिक्रम्य किञ्चिद्दद्यादितिश्रुतिरिति जीवत्पितृकस्यहोमान्तम-
नारम्भोवेत्यादिवचनेभ्य इति ॥ यत्तु उद्वाहेपुत्रजनने पित्र्येष्टयांसौ
मिकेमखे तीर्थेब्राह्मणमायाते षडेतेजीवतः पितुरिति मैत्रायणी
यपरिशिष्टं तन्मैत्रायणीयशाखिनां साग्नीनामेव नजीवत्पितृकः
कुर्याच्छ्राद्ध मग्निमृतेद्विजः येभ्यएवपितादद्यात्तेभ्यः कुर्वीतसा-
ग्निकइति सुमन्तुवचनेननिरग्नेर्जीवत्पितृकस्य श्राद्धानधिकारा-
दिति यच्चोच्यते यदुक्तम् पितृवर्गेमातृवर्गे तथामातामहस्यचे
त्यादि तत्रजीवद्वर्गपरित्यागस्य तीर्थब्राह्मणसम्पत्त्यादौनिरग्निजी-
वत्पितृकविषयत्वेनचरितार्थत्वात् तथाचाधिकारमाह महानदी-
षुसर्वासु तीर्थेषुचगयांविना जीवत्पितापिकुर्वीत श्राद्धम्पार्वणधर्मव
दिति यच्चोक्तं त्रिषुजीवत्सुमातृपूजनेनैवश्राद्धसिद्धिरिति तदप्यसं-
गतम् अग्निनः श्राद्धस्थलोपेङ्गस्य मातृपूजनस्यप्रवृत्त्यात्राप्रवृत्त्यनुपपत्तेः
नचश्राद्धमन्तरेणमातृपूजायाः कर्मणोङ्गत्वम् यच्चाभाधायिसपितुःपि
तृकृत्येष्वित्यादि निषेधस्तस्यश्राद्धाद्यन्यश्राद्धविषयत्वात् तथाच-
क्रतुःअष्टकासुचसंक्रान्तौ मन्वादिषुयुगादिषु चन्द्रसूर्यग्रहेपाते स्वेच्छ
यापूज्ययोगतः जीवत्पितानैवकुर्यात् श्राद्धमाम्यन्तथाखिलं अखिल-
मिति। व्यतीपातोजन्मऋक्षं चन्द्रसूर्यग्रहौतथा तिथिनक्षत्रवारांश्च

उदिद्याभ्युदयन्तथा एतांस्तुश्राद्धकालान्वैकाम्यानाह प्रजापतिरित्या दिकं आभ्युदयआरामसहादानायुक्षवः यत्वास्मातं नजीवत्पितृकः कुर्या च्छाद्धमग्निमत्तेद्विज इत्यनेनोनिरग्नि जीवत्पितृकस्य श्राद्ध-निषेधइति तदपिन उद्वाहेपुत्रजननेइत्यत्र साग्निशब्दाभावान्नि-रग्निविषयत्वोपपत्तेः उक्तञ्चअनग्निकोपिकुर्वीत जन्मादौष्टनिक-र्मणीति यच्च नजीवत्पितृकइत्यनेन साग्निजीवत्पितृकस्य श्राद्धवि-धानं तस्याष्टकादिनियत श्राद्धविषयं नसामान्येनसर्वश्राद्धविधायकं यथापरपक्षादिश्राद्धनिषेधानुपपत्तेः यदप्युक्तं जीवत्पितृकस्यहोमांत मनारम्भोवेति तस्याग्नेःपिण्डपितृयज्ञादि निषेधविषयंनाभ्युद-यिकमेवेति। तेभ्यःपूर्वतरायेवेत्यादिना भ्युदयिकस्य प्रतिप्रस-वोपपत्तेः तस्माज्जीवत्पित्रादि निकस्याभ्युदयिकं श्राद्धकर्तुमुचि-तमितिसिद्धम् ॥

## मू० नान्दीमुखाःपितरः प्रीयन्तामित्य क्षय्यस्थाने ॥ ८ ॥

अत्रनांदीमुखान्पितृनावाहयिष्य इत्यनेनैवनांदीमुखत्वात्प्राप्तौ पुनस्तद्ग्रहणंसर्वत्रप्रयोगार्थं तदुक्तं तत्रनांदीमुखमिति विशेषःस-मुदाहृतइति प्रकृतिश्राद्धेत्वक्षय्योदकदानन्तु अर्घदानवदिष्यते । यथैवनित्यन्तात्कुर्यात् अक्षय्योदकदानमिति कात्यायनेनपक्षान्त-रयोर्विहितत्वात्तन्निषेधोवाचनिकः। तेनप्रथमाविभक्त्यातस्येण चाक्षय्योदकदान,मक्षय्योदकैर्भवतीत्यर्थः। तथाच तथाक्ष-य्योदकस्थानेदद्या त्त्वीरयवोदकमिति पितृगृहत्वं सपितृप्राप्त्यर्थं तेनजीवत्पित्रादिकोपि समातृमातामहादिभ्यएव दद्यान्नपितृ संबन्धिभ्यइत्यर्थः अत्रैकआहुः अनग्निकोपिकुर्वीत जन्मादौष्टि

कर्माणि येभ्यएवपिता दद्यात्तानेवोद्दिश्यपार्वणमित्यादिवचनेषु यत्तच्छब्दनिर्द्देशात्पितृभ्यएवदद्यान्नस्वपितृभ्य इतितदयुक्तं स्वपितृभ्यःपितादद्यात्सुत संस्कारकर्मस्विति कात्यायनेन प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः स्नात्वानन्तरमात्मीयान्पितॄन्श्राद्धेन तर्पयेदिति काष्णाजिनिनाच स्वपितृभ्यएवश्राद्धविधानात् नच मातृमातामहादिकं परित्यज्य पितृमंबन्धिभ्योदातुमुचितं अतस्स्वपितृभ्यएवेतिसूत्रम् ॥

**सू० नान्दीमुखान्पितॄन्वाचयिष्यऽइति पृच्छतिवाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरःपितामहाः प्रपितामहाः नान्दीमुखा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ ९ ॥**

अत्रप्रथमोद्दिष्ट नान्दीमुखशब्देन वृद्धप्रपितामहादित्रिकस्यैव नान्दीमुखत्वंमाभूदित्यश्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्नान्दीमुखग्रहणं एवंमातामहेष्वपि अतएवमन्त्रे पितर पितामहाइति बहुत्वमुक्तं चकारोमातृवर्गप्राप्त्यर्थं तथाचब्रह्मपुराणे मातामहेभ्यश्चतथानान्दीवक्त्रेभ्यएवच अथनान्दीमुखीभ्यश्च मातृभ्यःश्राद्धमुत्त

। ननुचाभ्युदयिके मातृश्राद्धस्यपूर्वंभावित्वात्पितृग्रहणं

उचाते अग्निहोत्रंजुहोति,यवागूंपचती तिवत्पाठोर्थेनबा-

दो .. प .. : . ॥ मातृश्राद्धन्तु

। त्पितॄणान्तदनन्तरम् ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृत मित्यादिच अतश्चनान्दीमुख्योमातरः प्रीयन्तामित्यादिक्रमेणयथा-

लिङ्गम्प्रयोगः अथैतत्संदिह्यते किमयनवदैवत्यं श्राद्धमुतद्वादशदैवत्य-
मिति उभयथावचनदर्शनात् तथाहि मातृभ्यः प्रथमन्दद्यात्पितृभ्य-
स्तदनन्तरं ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृतमित्यादि चतुर्विंश
तिमतेतुमातृपूर्वान्पितृन्पूज्य ततोमातामहीस्तथा मातामहन्ततः
केचिदेवंयुग्मांस्तुभोजयेत् पुराणसमुच्चयेपि शस्तंनांदीमुखंश्राद्धम्पि-
ण्डैर्द्वादशभिःसदातथापि दधिदूर्वाचितयवैर्बदरैश्चविमिश्रितैःपिण्डा
नांदीमुखे देयामातृपूर्वांश्चद्वादशेति एवंविप्रतिपत्तौ यथाशाखं-
यथाकुलन्देशंवाव्यवस्थयाविरोधः तुल्यविकल्पोवा अथवाधनधान्य
पुत्रपशवादि वृध्यर्थंक्रियमाणम्वृद्धिश्राद्धं अग्न्याधानाद्यभ्युदयनिमि-
त्तमाभ्युदयिकमितिभेदः। तत्र वृद्धिश्राद्धन्द्वादशदैवत्यं आभ्युदयिकं
नवदैवत्य मितिव्यवस्थेति अन्वष्टकायांयच्छ्राद्धं यच्छ्राद्धम्वृद्धिहेतुकं
पित्रादीनांपृथग्दानं स्त्रीणांपिण्डः पृथक्पृथगिति अत्रवृद्धिहेतुक-
मित्यभिधानात् तथा शरीरोपचयेश्राद्ध मर्थोपचयएवच पुष्ट्यर्थमि-
तिविज्ञेय मौपचारिकमुच्यते तथा नक्षत्रग्रहपीडासु दुष्टस्वप्नाव-
लोकने इच्छाश्राद्धानिकुर्वीत नवसस्यागमेतथेतिवचनादिति ॥

## मू० नस्वधाम्प्रयुञ्जीत ॥ १० ॥

निषेधांतरोपलक्षणञ्चैतत् तेनशर्मादिकमप्यत्र नप्रयुंजीते-
त्यर्थः तथाचपुराणसमुच्चये नस्वधाशर्मवर्मेति पितृनामनचोच्चरेत्
नकर्मपितृतीर्थेन नकुशाद्विगुणीकृताः नतिलैर्नापसव्येन पित्र्यम-
न्त्रविवर्जितं अस्मत्कृत्वंनकुर्वीत श्राद्धे नान्दीमुखेक्वचिदिति अतश्च
नांदीमुखपितरमुकगोत्रे स्यादिप्रयोगः । अन्येतुपार्वणवन्नामश-
र्मादिक मपिप्रयुंजते तन्निषे धदर्शनात्कथमितिचिंत्य पार्वणत्र-
दित्यतिदे शाद्वातद्विधिः अतकश्चिदाह प्रकृतेस्वधावाचनेस्वधांन-

प्रयुंजीतेति निषेधइतितदयुक्तं सामान्येनाभ्युदयिकेतन्निषेधात् ॥

## सू० युग्मानाशयेदत्र ॥ ११ ॥

अत्राभ्युदयिकेयुग्मान्द्विचतुरादी न्विप्रानाशयेद्भोजयेदित्यर्थः अस्यदैविकत्वाद्देवे युग्मान्यथाशक्ति इतिपरिभाषयैवयुग्मत्वप्राप्तौ विशिष्टविध्यर्थंयुग्मग्रहणम् तेनपित्र्येपि युग्मानेवप्रातर्निमन्त्र्याशयेदित्यर्थः तथाचकात्यायनः प्रातरामन्त्रितान्विप्रा न्युग्मानुभयतस्तथेति अन्यच्च ज्येष्ठोत्तरकरान्युग्मा न्कराग्रायपवित्रकान् कृत्वार्घसम्प्रदातव्यं नैकैकस्यात्प्रदीयतइति युग्मानितिपुंस्त्वमविवक्षितम् तेनयुग्माभावेस्त्रियोपीत्यर्थः तथाच मातृश्राद्धेतुविप्राणाम लाभेपूजयेदपि पतिपुत्रान्विताभव्या योषितोष्टौकुलोद्भवाइति हवर्सिष्ठवचनात् संघोपि पित्रादित्रयपत्नीस्तु भोज्यामातृप्रतिद्विजैः। स्त्रीणामेवतुतच्छ्राद्धं मातृश्राद्धमतःस्मृतमिति आशयेदित्यपिविशिष्टविध्यर्थं तृप्तिमग्नेनैवभोजनोपलब्धेः अतश्च गुडशर्करादिनामधुरान्नम् भोजयेदितिविशिष्टविधिरित्यर्थः तथाचभविष्यत्पुराणम् ब्राह्मणैभास्करोदया भोजनंमधुरञ्च गुडमिश्रंसितायुक्तं संघृतञ्चौदनम्परं सरस्नान्मोदकांश्चैव नचाम्लकटुकांस्तथा कृष्णात्रेयोपि अन्यश्राद्धे पुदातव्यं नमांसस्मात्पूजनमिति अपिच अपसव्यंजानुपात मन्नमांसविवर्जितम् रक्तं विवर्जयेद्दर्भान्समूलांश्चतिलानपीति तथा द्राक्षामलकमूलानियवांश्चाथनिवेदयेत् तानेवदक्षिणार्थं तु दद्याद्विप्रेषुसर्वदेति ब्रह्मपुराणम् अतश्चद्राक्षामलकमूल यवनिष्क्रयिणीदक्षिणां युष्माभ्यांसम्प्रददइत्यादिप्रयोगः नैकैकस्मावदीयतइत्युक्तेः तथाभ्युदयिकश्राद्ध सन्देहोनिरस्यते तत्रकात्यायनः स्वपितृभ्यःपितादद्यात्सुतसंस्कार-

कर्मसुपिण्डानोद्वाहनान्तेषामस्याभावेतुतत्क्रमादिति अस्यार्थः
पिण्डशब्दः श्राद्धं लक्षयति आउद्वाहनादित्याङ् अभिविधौ ततश्च-
पुत्रस्य निषेकादिप्रथमविवाहपर्यन्तेषु संस्कारकर्मसु पिता स्वमातृ-
स्वपितृस्वमातामहेभ्यः श्राद्धं दद्यात् नपुत्रमातृमातामहादिभ्यः
तस्यपितुरभावे तेषामपि तृभ्रात्रादीनामेव नवानां तत्क्रमादेव नक्र-
मेणपित्रादीनां तेनैव क्रमेणाधिकारी ज्येष्ठभ्रात्रादिरपि दद्यादिति
नन्वेवंसति संस्कार्यस्य पुत्रादेर्मृतपित्रोः श्राद्धादौ मुख्याधिकारित्वा
त्सदति क्रमोनायुक्त इति नचजीवत्पित्रोर्ह्यनुष्ठानक्रमः समृतपित्रो-
रप्युचितत्वादिति वाच्यं प्रेतेभ्योदद्यादित्यादिवचनैः प्रत्नानामवश्य-
देयत्वात् तस्मात्तेषामस्याभावे तु तत्क्रमादित्यस्य तत्क्रमात्तदुपक्रमा
न्मृतपित्रादिमारभ्येत्यर्थकम् भ्रात्रादिरप्यधिकारी कुर्यादित्येवार्थः
तस्याभावे तु तः क्रमादिति पाठेपि तदर्थस्य प्रतीयमानत्वाच्चेति ।
अत्रोच्यते असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैरित्यादिना भ्रा-
त्रादयः पित्रभावे प्रतिनिधित्वेना विधीयन्ते प्रतिनिधेश्च सतधर्मा-
कर्मयोगादिति कात्यायनपरिभाषायां पितृधर्मप्राप्ते भ्रात्रादिः पितृ-
समानधर्मेति किञ्च तस्याभाव इति अभावः पञ्चविधः प्रागभावः
प्रध्वंसाभावः सन्निध्यभावः अधिकाराभावः अत्यन्ताभावश्चेति
तत्र संस्कार्येषु सति प्रागभावात्यन्ताभावयोरसम्भव एव प्रध्वंसाभावसं
न्निध्यभावाधिकाराभावानां सम्भवोस्तीति तत्र सर्वत्रापि वचनबलात्
पितुः पितृभ्यः प्रदानं विधीयते न संस्कार्यपितृभ्यः तथा च स्मृतिः ।
पितरो जनकस्यैव यावद्व्रतमनाहितम् समाहितव्रतः पश्चात्स्वान्यजे-
त्पितामहानिति पितामहानिति पित्राद्युपलक्षणम् तथान्यत्रा-
प्यव्यवहिते ताते पतिते षण्ढवर्जिते व्युत्क्रमाच्च मृते देयं येभ्य एव ददा-
त्यसावित्यादि यत्तु प्रेतेभ्यो दद्यादिति वचनं तदधिकारसम्बन्धिपरं

अधिकारस्यसहायत्वेनविवाहानन्तरम् स्वपितृभ्योदातुमर्हतीति तथाचच्छन्दोग्रन्थः नाश्नातियोद्विजोमांसं यस्मनोदारसंग्रहः तावेतौ मुनिभिः प्रोक्तौयनर्हौनिखदूपकाविति नाश्नातिमांसंश्राद्धे । इतिशेषः ननुच समाहितमतः पश्चात्साम्यजेतपितामहानिर्थनेनोपनयनादूर्ध्वंस्वपितृभ्यो दातुमधिकारस्तत्कथं विवाहानन्तरमितिचेच्यते उपनयनादूर्ध्वं स्वपितृभ्यो दातुं कर्तृन्तराभावएवपुत्रविषयः कर्त्तरसद्भावेतु प्रतिनिधिभूतःसएवतदाद्यविवाहपर्यंतंसंस्कार्यस्य पितृभ्यएवदद्यादिति तथाचमनुः श्राद्धं कुर्यादवश्यं तुप्रमीतपितृकोद्विजः व्रतस्थोवाव्रतस्थोवा एकएवभवेद्यदीति तस्मात्युक्तमुक्तम्पितृभावेप्रतिनिधेःप्रतिधर्मं प्राप्यासंस्कार्यस्यपितृमातृपितामहेभ्यः श्राद्धं दद्यादिति तथाचस्मृतिः नान्दीश्राद्धं पितादद्यात् दादेरपाणिग्रहेवुधः अतऊर्ध्वं प्रकर्त्तव्यम् स्वयमेवतुनांदिकमिति । अपरमपि पित्रोस्तुजीवतोःपुत्रः कुरुतेदारसंग्रहम् पितुर्नांदीमुखंप्रोक्तम् नपुत्रस्यकथञ्चनेति ननुपित्रोर्जीवतोरेव तत्पितृभ्योनान्दीमुखंप्रोक्तं मृतयोरन्यःकरोतीति तत्कथंसंस्कार्यस्यपितॄणामतिक्रमो युक्तः सत्यं उद्वाहनादितत्रविनापितृपितृभ्यएवविधानात् स्मृत्यर्थतिपरिभाषया प्रतिनिधेस्तद्व्यक्रमस्य वाचनिकत्वात् अपिच वचनांतरं कन्यापुत्रविवाहेषु प्रवेशेनववेश्मनः नामकर्मणिबालानां चूडाकर्मादिकेतथा सीमन्तोन्नयनेचैव पुत्रादिमुखदर्शने नान्दीमुखम्पितृगणम् पूजयेत्प्रयतोगृही तिगृहस्थेपदेशात् चूडाकर्मादिकदुत्यादाविवाहपर्यंतंवेदितव्यं तदूर्ध्वंतु द्वितीयविवाहादावपि सर्वत्रजीवत्पितृकःपितृपितृभ्योमृतक स्वपितृभ्यइतिविवेकः तत्स्थायमर्थः पितास्वपुत्रस्यनिषेकादि विवाहपर्यंत संस्कारकर्मसु स्वमातृपितृमातामहेभ्यःश्राद्धं कुर्यात् पितुरभावेसंनिहिते वाधि-

दाराभावे वा तत्प्रतिनिधिं कृत्वा अग्न्याधानादि विवाहपर्यन्तम् कर्म गुरु-
सान्निध्ये पितृभार्या एव कुर्यात् कर्त्रन्तराभावे उपनीत एकपुत्र स्वयमेव
स्वविवाहे स्वमातृस्वपितृस्वमातामहेभ्यो दद्यात् विवाहानन्तरं
जीवत्पितृकः पितृपितृभ्यो दद्यात् मृतपितृकः स्वपितृभ्य एवेति स-
र्वमनवद्यम्।

इति श्रीश्राद्धकाशिकायां षष्ठीकण्डिका समाप्ता ।

व्याकरणविद श्रीमद्दत्तसुधाकर श्रीविष्णुमिश्रात्मजश्रम
कृष्णमिश्रकृतश्राद्धकाशिकायांसूत्र इत्थं ।
श्राद्धाध्यायः समाप्तम् ॥

इत्थमाद्यैश्चादिसर्वश्राद्धमभिधाय पुनातृप्तास्मीत्यादिना तर्प-
णमनुष्ठाय श्राद्धान्ते ग्राममतृप्ता वितरीयातीत्यादिदोषदर्शना-
दनेकविधद्रव्यैस्तां प्रतिपिपादयिषुः सूत्रमारभते ॥

## सू० अथतृप्तिः । १ ॥

वक्ष्यतइतिमवशेषः अथशब्दोऽधिकारार्थ आनन्तर्यार्थस्सूत्रादेवाव-
धेः तेषग्राम्यारण्यौषधिमूलफलमृगपक्षिमीनादिनानाविधद्रव्यै-
स्तृप्तिर्निरूप्यतेयत्नमित्यर्थः तथाचादित्यपुराणं विविधान्यानिमा-
सानि पितृणांतृप्तिकारणात् । दातव्यान्यनिषिद्धानि श्राद्धे चैवा-
क्षयेतृप्तिः ॥

## सू० ग्राम्याभिरोषधीभिर्मासन्तृप्तिः ॥ २ ॥

पितॄणामितिशेषः कालावधिरितिद्वितीया अवतप्तिरल-
नुयुक्तो पुनरादगृहणमपाप्राप्त्यर्थं तेनौषधिजन्याभ्यादेवतृप्तिर्न के-
वलौषधीभिरित्यर्थः तथापस्तुति: यापोरसाश्चौषधीना ईं० ग्रु-
त्स्माद्येषधयः केवलः शाल्याद्यानधिनरकर्षौषध्य उपशायायारस-

स्तस्मादापःपीताः केवल्योनपिबन्ति यद्देवेभ्यः सएषदृष्टोभवत्य-
थैवविचिन्त्यंतोत्यन्वयव्यतिरेकेणार्थवादइति ओषध्योधान्यानि।
तथाचस्मृतिः दशग्राम्याणिधान्यानिभवंति ब्रीहियवास्तिलमाषा
अणुप्रियंगवोगोधूमाश्चमसूराश्च खल्वाश्चखलुकुलाश्चेति अयमर्थः
ब्रीहयस्तण्डुलधान्यानि तानिचश्वेतरक्तवर्णानि श्राद्धेदेयानि
कृष्णधान्यानिसर्वाणि वर्जयेच्छ्राद्धकर्मणीतिनिषेधात् प्रचेतास्त्वाह
कृष्णमाषास्तिलाश्चैव श्रेष्ठास्युर्यवशालयः महायवाब्रीहियवा स्तथै-
वचमधूलिकाः कृष्णाःश्वेताश्चलोहाश्च ग्राह्याःस्युः श्राद्धकर्मणि।
एतद्व्याख्यातंमाधवीये यवाःसितदीर्घशूकाः महायवाब्रीहियवा
श्चयवविशेषाः मधूलिकाधान्यभेदः कृष्णाश्चलजाः कृष्णाब्रीहयः
लोहाःरक्तशालयः अन्यस्त्वाह मधूलिकायावनालजातिविशेषाः
तद्विशेषणंकृष्णाः श्वेतलोहिताः महायवावेणुयवाइति अत्रकृष्ण-
धान्यानिसर्वाणीत्यनेन विरोधान्माधवीयव्याख्यानमनुचितम् य-
वास्त्रिविधा महायवाब्रीहियवाश्च तिलाःकृष्णाःकृष्णानिस्तुषामा-
षाः तथाचकृष्णामाषास्तिलाश्चेति अमेध्याःसतुषामाषानिस्तु-
षापिमसूरिकेतिच अणुःक्षुद्रसस्यं प्रियंगुःकंगुस्तद्भक्षणंपृथग्गृह-
णंचभेदापेक्षं तथाचनिघंटुः पीततण्डुलिकाकंगु प्रियंगुःकृष्णरौ-
मता सितकंगुस्तुमुसटो रक्तकंगुस्तुवाधिकः चनकः काककंगुःस्या
च्छ्यामाकस्तृणबीजकइति मसूराःसतुषानिस्तुषाश्च नश्राद्धेदेयाः
निस्तुषापिमसूरिकेत्युक्तेः खल्वाःखलकुलाश्चाप्रसिद्धाः कोद्रवच-
णकौवाच्यौषाग्राम्यत्वात् दशेतिग्राम्यसंख्यान किन्तुहविष्यसंख्या
तथाचविष्णुःतिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैःशाकैः श्यामाकैः प्रि-
यंगुनीवारैर्गोधूमैर्मासम्प्रीयन्तइति मसूरादिग्रहणाच्च तथा मा-
संतृप्तिःपितॄणान्तु हविष्यान्नेनजायतइति क्षुद्रधान्यानिश्यामाक

प्रियंगुतिलगौररक्तसर्षपवर्ज्जं सर्वाण्यश्राद्धार्हाणि निरस्तत्वात् तथा-
च वर्ज्यो मर्कटकः श्राद्धे राजमाषास्तथाणवः विप्रुषिकामसूराश्च
श्राद्धकर्मणि गर्हिताः भारद्वाजोऽपि निरस्तान्यपि सर्वाणि भक्ष्यभो-
ज्यानि यानि च तानि सुनैत्रदेयानि सर्वत्र श्राद्धकर्मणीति अणवः क्षुद्रा
न्यानि कृष्णानि हृदयारसवक्योऽपि मकुष्ठो राजमाषाश्च मसूराश्च-
णकास्तथा कोद्रवाम्लकाराजसर्षपाः श्राद्धनातकाइति राजसर्षपो-
ऽत्र किं: तथाच निघण्टुः आसुरीराजिकाराजीक्षविकाराजसर्षपाः
राजिकाभद्र इत्यन्याराजिकाकृष्णसर्षपाइति चतुर्विंशतिमतेऽपि को-
द्रवाराजमाषाश्च कुलुत्थाश्चणकास्तथा निष्पावास्तुविशेषेण षडे
तान्वर्जयेत्सदा यावनालानपितथा यर्गोदक्लिविपक्ष्यितइति राज-
माषाःपीतगौरवर्णमाषाः लोविया गोरवांसइतिमध्यदेशप्रसिद्धा. ।
निष्पावा बेल्लाः शिविंवइतिदक्षिणापथप्रसिद्धः इतिकश्चित् चर-
कावनमुद्गाः यावनालाजोंधलीतिप्रसिद्धाः । तथाच निघंटुःया-
वनालोदेवधान्यं जुर्दलिंजुन्नलोनलइति अत्र निष्पावनिषेध.कृष्ण-
विषयः कृष्णधान्यानि सर्वाणीतिनिषेधात् यवव्रीहिसगोधूमौति-
लामुद्गाःससर्षपाः प्रियङ्गवःकोविदारा निष्पावाश्चाचशोभनाइति
मार्कण्डेयेन कृष्णेतरस्य विहितत्वात् शोभनःकृष्णेतरः स्मृत्यन्तरे
मुद्गाढकीमाषवर्जं द्विदलानि दद्यादिति द्विदलानिदलितु योग्या-
नि मुद्गःसाध्यः हरितमुद्गश्यामापश्यामाकेति ब्रह्मपुराणेऽपि हरि-
तस्यविहितत्वात् माषोराजमाषः तद्ग्रहणंकुलुत्थाद्युपलक्षणम् ।
तथाचमरीचिः कुलुत्थाश्चणकाः श्राद्धे नदेयाश्चैवकोद्रवाः कटुका-
निचसर्वाणि विरसानितथैवचेति । आढकीतुवरी अरहरीतिप्र-
सिद्धाः एतान्वर्जयित्वाद्विदलानिदद्यादित्यर्थः ।नित्यनुष्टत्तौ विष्णु-
पुराणे मसूरचारयालोक कुलुत्थशणभिश्रवइति शणभिन्नादि

तेरानुकैश्चात्यक्षोटैः पनसैस्तथा काकोलैःक्षीरकाकोलैस्तथापि-
ण्डालुकैः शुभैः लाजाभिश्चशिलाभिश्च त्रपुसैर्वारुचिर्भटैः।
सर्षपैराजशाकाभ्यां इंगुदैराजतन्तुभिः प्रियालामलकैर्मुख्यैः।
फलुभिश्चातिलम्बकैः वैदांकुरैस्तालकन्दैश्चुक्रिकाक्षीरकावचैः
मोचैःसमोचैर्लकुचैस्तथावैबीजपूरकैः मुंजातकैः पद्मफलैः भक्ष्य-
भोज्यैःसुसंस्कृतैः रागखाण्डववैश्चैवश्च चिजातकसमन्वितैः दत्तै-
स्तुमासम्प्रीयन्ते विधिवत्पितरोन्नृणामिति अस्यार्थः विदारीतस्याः
कन्दमितिशेषइत्यन्वयः भुकण्डोजलप्रभवः कन्दविशेषइतिमञ्जु
रीकारः कैन्दुकःकचूराख्यशाकः जलप्रभवः कन्दविशेषइत्यन्यः।
बिसंमृणालम् शृङ्गाटकम् जलजंत्रिकण्टकाफलं सिंघाडइति प्र-
सिद्धः कन्दःसूरणाकन्दः कर्कन्धुस्वादुबदरीफलस्वदरमन्यबदरफलं
पालेवतञ्जम्बीराकारंफलङ्काश्मीरप्रसिद्धं आर्द्रकंआर्द्रकन्दः। अक्षो
टःपार्वतीयबीजफलम् पनसैः कण्टकिफलैः काटहरइति प्रसिद्धैः
काकोलैर्मधुराफलैः क्षीरकाकोलैस्तद्भेदैः पिण्डालुकैश्चतुर्भेदैः।
तथाचमनुः पिण्डालुकमचगन्धंमध्वालुस्वादुरोमशं शङ्खालुशङ्ख
सद्वाशंकाष्टालुस्त्वल्पकाष्टकमितिलाजाभिर्भृष्टधान्यैः तथाचशंखः
लाजन्नमधुयुतान्दद्यात्सक्तून्शर्करयासहेति शिलाशैलेयं त्रपुसंत्रपु-
सीफलम् उर्वारुस्वादुकर्कटी चिर्भिटः कटुककर्कटी सर्षपोगौरस
र्षपशाकः राजशाकःशाकविशेषः कृष्णासर्षपशाकमिति माधवीये
तन्न तस्यप्रतिषेधात् इंगुदस्तापसतरु. राजतन्तुः प्रियालोराजाद-
नम्। निघण्टोक्तेः प्रियालाद्राक्ष्याथा फलुका काटुम्बरिकाफलम्
अतिलम्बकैस्तालकन्दे स्तालमूलैः कन्दैः चुक्रिकाचिञ्चिकाफलम्।
तिन्तिडीफलमित्यर्थः। नागरण्डातिन्तिडीतिस्वामिनारदवचनात्।
तिन्तिरीकाफलाध्यचं मोचाकदलीफलम् लकुचं वांकुचफलैः बी

न्द्रराजः । सुनिषण्णाविनुन्नशाकं । सुरतुनीति ख्यातमुत्तलभवं शाकमितिकश्चित् । सुनिषंणं वांगेरीसदृशशाकम्वा । वांगेरीसदृशैः पत्रैःसुनिषंणकमुच्यते । शाकञ्जलाशयेदेशेचतुः पत्रीतिगच्छन्तइति सुश्रुतोक्तेः । सुवर्चला.ब्रह्मसुवर्चला । सूर्यावर्तइति गोविन्दराजः । वधुल.शोकर्णिका । भिण्डिणीद्राक्षाक्षुद्रद्राक्षा । लकुचोलिकुचः मोचाकदलीफलं कर्कन्धुरुत्कः शीवकस्वकपुर्व्यवारम्प्रियाल्, नियेषः तन्दुकोसितसारः शृंगाटकमुक्तम् गवयकम्कोलकसइतिप्रसिद्धफलम् दृश्तीविदिग्धिकालं वरेहटाइतिप्रसिद्धम् दोर्वमूलं तिझकेरीफलम् मूलकमिल्वत्यः पटोलोद्दीर्घपटोलोराजीफलमित्यर्थः विचेण्डाइतिलोके यत्तु गन्धारिकापटोलानिप्राद्धकर्मणिवर्जयेदितिपटोलनिषेधः सक्षुद्रपटोलविषयः तथाचनिबन्धः पटोलीयाद्वितीयान्यात्वादुपलफलावसीदिति शिवमप्रसिद्धं कुमारेश्वरसंवादेपि । पालेवतमस्त्रीकाखर्जूरामकसेरुका विल्वामलकमाद्येटपनसाम्रातकामिच । वेचुर्वेवांकुराःशालंलकुचश्चाम्लमेवच शीतकन्दंविसन्नालिष्टरकश्लूलक्षणाथा । इत्यादिमेध्यमन्यच्चप्रदेयश्राद्धकर्मणि । वेचु.शकभेदःइतरस्यनिषेधात् । वेचुमंटाकशाकमित्यन्यः वर्ज्यशाकान्याहविष्णुःभूस्तृणशिग्रु,सर्षं पसुरसार्कजकूष्माण्डालाबुवार्त्ताक पालक्यत.न्दुलीयककुसुमादिवर्जयेदिति भूस्तृणोरोहिस.गन्धवयाख्यं शाकमित्यन्य.शिग्रु,मोद्विनाद्रतिप्रसिद्धं सर्षपोराजसर्षपः इतरस्यविहितत्वात् सुरसाश्वेतनिर्गुण्डी अर्कजः श्वेतार्कजः कुटेरद्धतिप्रसिद्ध. । पालक्यः पलकीतिप्रसिद्धः तंदुलीयकञ्चोराइतिप्रसिद्धं वार्त्तकंश्वेतदृन्ताक । उशना । नाशिकाशणशल्लाककुम्भानांवुविद्भवान् । कुम्भीकम्बुकवृन्ताकद्रोविदारांश्चवर्जयेत् । वर्जयेद्दृग्यञ्जनंचाद्य काञ्जिकम्पिण्ड-

ग्लस्कं करंजं वैपिषान्यैर्वरसगन्धोत्कटास्तथा । नालिकाप्रसिद्धा । दीर्घनालकाग्रैलापत्रवेतिनाथचीवं छत्राकं शिलिन्ध्रः कुम्भीवीपर्णिका मधुकं टालालाबुगृञ्जनाकं श्वेतं कोविदारश्चमकरकम् गृञ्जनो हरि-द्रावर्णः पलाण्डुश्चिभि मः काञ्जिकम्प्रसिद्धम् करंजः शिरिविल्वफलम् पुरा लोपिरंचमूदीरंचुर्वसर्जकम् भूस्तृणानिच धपिदोक्षाश्चनिर्यासा लवणा न्योषराणि च। भरद्वाजोपि सत्यांशुकूष्माण्डफलम्वक्त्रकन्दञ्च पिप्पली। विविधकानिवारीराणि कोविदारगवेधुकाः । कुलत्थशणजम्बीरका-रणाविलस्थैवच । अनाद्गन्यद्रक्तपुष्पं शिग्रु पारन्लस्थैवच । एतानि नैवदेयानिसर्वस्मिन् श्राद्धकर्मणीति । पैठीनसिः हस्तारांगालिका पोलकुशुंभाश्मंतकाश्चेति श्राद्धनामभक्ष्याइति । स्वल्पमन्तरं पिण्डा लुकशुण्डीरच्चम ह्रं स्वमालिकम् । कूष्माण्डंपत्नुवीजानि श्राद्धे दत्वांवजेद्धः । भविष्येपि लशुनंगृञ्जनश्चैव पलाण्डुकुत्सकानिच हस्तास्मामविपाकाश्चजानीयात् श्वांतिदूषितानइति । एषामर्थः।वंश करीरवंशांकुरः सरसंपर्णी सद्धायन्यः सर्जवंशाखफलम् । पीतमा-रकमन्यः चवेदोक्ताः भिषिद्धनिर्यासाः अश्मप्रभवादयः । तथा-चमनुः लोहितान्वृक्षनिर्यासान्व्रश्चन प्रभवांस्तथेति । लोहिताश्च निर्यासास्ताश्चादयः लेपपाठश्चैतयर्कानां हिंगुकर्पूरादीनामनि-षेधः । हिंग्वादीनां विशेषमग्रे वक्ष्यामः श्रीश्चराधिकृतलवणानि सर्जीसकमसूराश्चबोङ्कमा लवणकृतमितिवचनात् । सैन्धवसामु-द्रादीनां विहितत्वात् । तथाच लवणेसैन्धवसामुद्रे इति अपिच सैन्धवंलवणं यच्च यच्चमानससम्भवं । पवित्रे परमेह्येतेमत्यक्षे अपि नियमः मानससम्भवंसांभरीति प्रसिद्धमिति । हलायुधः करीरं गूढपत्रङ्करीरश्चइतिप्रसिद्धम् कोविदारवृक्षः वज्रकदम्बोऽश्वः । सूर-णगवेधुका शर्मञ्चपत्राणि । जंबीरोदन्तशठफलम् करम्भाणि

क्षारयवक्षारसौवर्च्चल सौवर्च्चकादिलवणानि । पीतम्पीतिका-
शाकम् पश्मलकोमहोलीष्टचइति प्रसिद्धस्तच्छाकम् । हन्ताकंश्वेतं
तथा चदेवलः कण्डूरंश्वेतहन्ताकं कुष्माण्डञ्चविवर्जयेत् । उपमन्यु-
रपि नाश्नीयाच्छुक्लवृन्ताकं मातुलानींतथाण्डकं षण्डकञ्चवार्कं
मातुलानिभङ्गेति कण्डूरंकपिकच्छूः । तत्फलङ्कुर्जूरफलमित्यर्थः।
कुष्माण्डंहन्तालाबुसदृशफलम् पिण्डालुपेण्डक इतिप्रसिद्धं शुक्लीरं
करमर्द्दः करवन्दफलानि । बहुबीजानिबहुबीजपूरकादीनि
पलाण्डुःश्वेतकन्दः पलाण्डु विशेषः लशुनन्दीर्घपत्रञ्चपिच्छाग
न्धोमहौषधम् । कारयश्चपलाण्डुश्च लताकाश्चपराजिका ।
गृञ्जनम् पतनेष्टश्च पलाण्डोदशजातय इति सुश्रुतोक्तेः कवकं
शिलीन्ध्रः कुमारसंवादेपि वर्ज्यास्तिलचमसूरास्तुकोद्रवालवणाकृतं ।
भूस्तृणं सरसं शिग्रुम्पालक्यासुमकं तथा । पिण्डमूलञ्च वर्ज्यानि
लोहितंव्रश्चनानिच । पलाण्डुं विड्वराहञ्च छत्रा कंग्रामकुक्कुटं
लशुनंगृञ्जनं जंबूफलानिकवकानिच तण्डूलीयक सुहालराज-
माषासुरीरपि । कृष्णाजात्यतसीतैलम्भयश्च जाविका दिकमिति
सुमकङ्कादिरीसं श्यामकङ्कुलभवंशाकंकुद्दालःकोविदारः मासुरीरा
जिका । कृष्णाजातीकृष्णजीरकः करोञ्जीतिप्रसिद्धश्च भतसी-
कुम। शेषम्प्रसिद्धं हारीतः नवटंश्चौन्दुंरदृधित्थनोल मातुलिङ्ग-

द्रव्येषु हिंगुशाकेषु कालानद्यच शुभानिच निषिद्धे त्यर्थः पुलकाद्
सम्क्षान्दस.। कालानलः छायार्जक.कुहेरद्भुतिप्रमितः शुभाशुभा-
ख्य:शाकविशेषः इत्यादिनिषेधः विधिस्तुपिप्पलीमरिचंञ्चैवपटोल
हस्तीफलमितिवायुपुराणे कुमारेश्वरसम्वादे पिप्पलीमरिचंचैशुप
टोलंहस्तीफलमित्यादि आदित्यपुराणे पि मधूकं रामठञ्चै यकर्पू-
रंमरिचङ्गुडमित्यादि रामठंहिङ्गुः एवंवचनविप्रतिपत्तौकेचिदाहुः पि
प्पलीमरिचं हिंगूनांसंस्कारकत्वेनविधिर्युक्तःप्रतिभाति केवलाना-
मतिनिषेधः अपरेतु संस्कारान्तराभावेविधिरन्यथाकेत्याहुः। मोह-
शीपरूणाग्रहणावह्निकल्पद्रुमेके एवसमतिमंस्कारकत्वेन विधियुक्तः
प्रतिभाति । संस्कारत्वेनस्वादूनिमधुराणिचेतिस्वादुत्वविधित्वो
पपत्तेः तथाच शुंठीमरीचम्पिप्पल्योधान्यकाजाजिहिङ्गुकम् पिप्प-
लीमूलसंयुक्तसंस्कारद्रतिस्मृतमिति शङ्खः कृष्णाजाजीविडञ्चैव-
सीतपाकीतथैवच वर्जयेल्लवणं सर्वंतथाजम्बूफलानिच । कृष्णाजा
जीकृष्णजीरकः विडंविदाख्यम् । लवणं सर्वदेश्ययसामुद्रमाभरि-
व्यतिरिक्तान् मत्स्यापडपुराणे आसनारूढमन्नादांमृपादोपहतमेव
चमनेध्यादागतैः । स्पृष्टमभुक्तम्पर्युषितञ्चयत् द्विःस्विन्नम्परिदग्ध-
ञ्चतथैवाग्रावलेहितम् शर्कराकीटपाषाणैःकेशैर्यश्चाप्युपद्रुतम्
पिण्याकमथितञ्चैवतथातिलवणञ्चयत् सिद्धाःकृताश्चयेभक्ष्याः
प्रत्यक्षलवणाकृताः वाग्भावदुष्टाश्चतथादुष्टैश्चोपहृतांस्तथा यास-
साचावधूतानियञ्चानिश्वाकर्मणीति आसनारूढमासनोपरिकृतं
पादोपहतंपदास्पृष्टम् अमेध्यादागतैःचर्मकारादिपरिपवियश्चाना-
दागतैरशुद्धैःस्पृष्टम् द्विःस्विन्नन्द्विः पक्वम् परिदग्धमतिदग्धम्
ग्रावनेह्नितंग्रावात्पूर्वमास्वादितम् पिण्याकन्तिलकल्कः मथितं
मथिनोलितन्निर्जलन्दधि करेणमथितन्दधीतिनिषेधात्

ष्टार्थमामस्याप्राधान्यार्थं अथमस्युक्तेप्रधानइतिपाणिनिस्मरण-
विरोधादन्यस्यकथमप्राधान्यं नेति उच्यते अविदचितत्वेनास्यदो-
षपरिदूषितत्वात् तथाच विवदस्यहिशब्दस्यप्रधानाङ्गीकरणन्नचा-
सुसतेति नचान्नमन्तरेणाष्टपलौमूलफलादेःसामर्थ्याभिप्रायः प्रधा
नगुणसमावसम्भवोमस्तौ तस्मात्विस्पष्टार्थमेवसहेतुरुक्तं । सचा-
न्ने नोत्तरास्तर्पयन्तीतिक्वचित्पाठस्तत्रोत्तरामूल फलाद्यस्तेनैयम-
स्तर्पयन्तिहृष्टान्कुर्वन्तिनकेवलानित्यर्थः एवंजहिंस्यात्सर्वभूतानी-
त्यहिंसाधर्मंप्राप्तिमभिधायेदानीं हिंसाधर्ममाह ।

## मू० छागोस्त्रमेषानालभ्य ॥ ६ ॥

छागोवर्करःउस्रस्तुपरः सचशृंगहीनछागादि तथाचस्मृतिः
स्तूपरोवाथविप्राणाइति लेपोमंदः एताग्पिवहिंगेनहत्वापचेदित्य-
र्थं. तथाचात्रिः मधुपर्के चसोमेचदैवेपित्र्येचकर्मणि अत्रैवपशवोहिं-
स्यानान्यत्रेतिकथञ्चन स्कन्दसंवादेपि अर्थेदैवपितॄणांहियोहिन-
स्तिपशून्द्विजः सयज्ञफलमाप्नोतितेयान्तिपरांगतिम । जावालो-
पि हिनस्तियःपशून्स्वार्थमुद्दिश्य वसपापभाक् । शास्त्रापदेशतोहिं-
सन्नपिस्वार्थेनदुष्यतीतिमन्वेकआहुः । उक्षोवलीवर्दः तथाच म-
होक्षंवामहाजंवाश्रोत्रियायोपकल्पयेदिति तदयुक्तम् महोक्षत्व-
शब्देनतूपरस्योक्तत्वात् तथाचजावालः विषाणोद्भवकालेतुयोवि-
षाणविवर्जितः समहोक्षंवदन्त्याद्यास्तूपरञ्चापिपावनमितिमहो-
क्षःपक्षीवामहोक्षइतिप्रसिद्धः तथाचजातूकर्ण्यः किञ्चिल्लोहित-
वर्णोहिदीर्घपुच्छोगुरुस्वरः ह्रस्वचोटित्वयःपक्षीसमहोक्षेतिपाठन-
इति किञ्च तपस्याभक्षत्वमुक्तम् तथाचेश्वर. साक्षाद्धर्मोऽपिपः-
प्रोक्तोमन्मूर्तिर्मंमवाहनः तंयदापिहियोहन्तितेनार्हस्कन्दताडितः

वृद्धदेवलोऽपि वेसरांश्चगजग्रावांश्चपभान्करिमाचलं रासभश्चाप्यथ-भवेद्दिट्कृमिर्भवेभवत्विति करिमाचलः शृगालः । उक्त.शतवच्छि-न्नामदत्यनौ उक्त शतवलादुस्तरलूपरोत्वगभदितव्यिल्यमिधानात् । तदपिन पशवालम्भमकारणात् नहन्यान्मत्स्यसूकराविति निषेधात् अतयोरत्रशब्देनकलौछागमेषावेव.पशुपञ्चकमध्येतयोरेव भक्ष्य-त्वाद्दचनोक्तत्वाच्च तथाचश्रुतिः पुरुषोश्वोगौरविरजोभक्ष्येताव-क्तोवैशर्वेपशवइति गोभिलसूत्रञ्च छागोमेषोवाआलभ्यादिति । ननुचछागमेषग्रहणेनैवतल्लब्धेः किमर्थमुस्रग्रहणं उच्यते विशेष-विध्यर्थत्वादित्यदोषः । तथाच स्कन्दस्यादे वार्ध्रीनसस्तथाछाग-स्कोलाहाजपशुपरंस्मृतमिति । इदग्रादेतद्ववेदत्तं मानन्त्यायतिला-मधु अन्यच्च अनन्ताखड्गमांसेनलोहच्छागाच्च नूपरादिति । अत्र कश्चिन्नाप्यक्तादाह । छागोसुमेषानिति पुंस्त्वमविवक्षितं उपादीय-मानत्वा त्पशुनायजेतेतिवत् सर्वासांपशुजातीनामारब्धभक्ष-त्वाथा । विधानेहुनदोषस्यादन्यथानरकंव्रजेदिति । अन्येत्वाहुः पशुनायजेतेत्यत्रापिपुंस्त्वस्यैवविवक्षितत्वात् पुंव्यक्तिरेवध्यानस्त्री-व्यक्तिरिति । अत्रानूचानाः प्रमाणम् ॥

## मू॰ क्रीतालब्ध्वावाऽस्वयम्मृतानाहृत्यपचेत् ७

वाशब्दःपशुबन्धाभावे अस्वयंमृतपक्षणम् । निषिद्धवर्जनोप-लक्षणं तेनपशुभावेविहित मृगपचादिमांसानिक्रय लाभाभ्या-माहृत्यपचेन्न निषिद्धमित्यर्थः। विनामांसेनयच्छ्राद्धं कृतमप्यकृतंभ-वेदिति । श्राद्धवैकल्यापत्तेः पद्मपुराणे विनामांसेनयच्छ्राद्धन्नात्र तृप्तिकरम्भवेत् । क्रव्यादाः पितरोयस्मात्तस्मात्तेनैव तान्यजेदिति अतैकपक्षकारविश्लेषम बुध्यास्वयंमृतानपिपचेदित्याहुः। तदयुक्तं

तेषांनिषिद्धत्वात् तथास्मृतिः उच्छिष्टस्यघृतादानेऽहतमांसस्यभक्षण-
म् पशुतुल्यादन्तकाष्ठस्यतुल्यंगोमांसभक्षणैः तथा शयशाकम् त-
थांसकूर्चे समयितर्दधिपशुल्यादन्तघर्षं चतुल्यङ्गोमांसभक्षणैरिति
महाभारतेपि विषच्छन्नहतस्यैवव्याधितिर्यग्घतन्तथा नमशसक्ति
वैश्राद्धे यज्ञशस्त्रविवर्जितम् विषच्छन्नारण्येपतितपलाटौविषमक्षेप-
केनहतं तिर्यग्घतंसंघाति रिक्तहस्तादिहतं तयोरभ्यनुज्ञानात्।
तथाचसिंहव्याघ्रहतंचयत् इति प्रशस्तमितिशेषः अथवाश्राद्धेत-
स्यापिनिषेधोविधिर्नित्यभोजनविषयः एकमूलकत्वात् शस्त्रविव-
र्जितमयंमृतं अनुपाकृतमांसानिसौनंवल्लूरमेवच स्मृतिलोक्यानि-
षिद्धांश्चमृगमीनाण्डजानपि सौनंहिंसास्थानभवम्। अनुपाकृतंसं-
स्कारहीनम् वल्लूरंशुष्कंवर्जयेदिति। पृष्टमांसंवृथामांसंवर्ज्यमां-
सम्प्रपुरक। नभक्षयन्तिसततम्पृष्ठमांसानिचेति। मार्कण्डेयः।
पृष्टमांसम्मैरइतिप्रसिद्धं तथाचवामनपुराणे पृष्टमांसाशिनोमूढा
स्तथैवक्रौञ्चजीवनः स्त्रियःतेऽपिभक्ष्येतेनरकेरजनीचरोपि गोपम-
न्यतोज्ञेयम् ननुवाफलमूलैरौषधीभिर्वैवहिंसाधर्मेयथाहि मृत्का-
नन्तरंछागोस्वमेधानालभ्येति हिंसाविधायेदानीं क्रयलाभोमूल्य-
यतावाशब्देनहिंसानिषिद्धेति। तथाच कन्दमूलफलाभावेमांसा
न्याहुर्मनीषिणः पुण्यानिमुनिगीतानिलब्धानिच वधंविनेति। च-
तुर्विंशतिमते महाभारतेपि क्रीत्वास्वयम्वाप्युत्पाद्यपरोपहृतमेववा।
देवान्पितॄनर्चयित्वाखादन्मांसन्नदुष्यति एषउक्तोविधिर्मांसस्य।
सर्वकामफलप्रदइति तस्माद्वाशब्देन हिंसान्निषिध्यक्रयलाभावेव
सूत्रकाराभिमतावितिऽत्रोच्यते यदुक्तं। हिंसानन्तरंक्रयला-
भौसूत्रयताहिंसानिषिद्धेति। तन्न पशुबन्धासम्भवेक्रयलाभयोरनु
क्तत्वात् तथाचस्कन्दसम्वादे। मांसाभावेकृतेश्राद्धेध्यायन्तेपितृ-

देवताः करिष्यतिसुतोवश्वाग्र इ॑ पश्चान्मांसामिषं । दद्यातिलश्वामांसन्नतंशपन्तिरूपामुहुरिति मांसाभावेपश्वसंभवे । यत्वभिहितं कन्दमूलफलाभावइत्यनेन हिंसानिषिद्धेति तदप्ययुक्तं । कंदमूलफलाद्यभावेयथंविनेत्यहिंसाधर्मेण प्रतिपादकस्यान्नहिंसानिषिद्धेति । यच्चाभ्यधायिक्रीत्वास्वयंवाप्युत्पाद्येत्यादिनान्नाम्नविधिरिति तदपिमन्दमिति तस्याप्यमांसभुग्दाक्षिणात्यपरत्वेनतद्देशविषयत्वात् दृश्यतेच देशविषयत्वाचारः तथाच बृहस्पतिः । उदुह्यतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः । मध्यदेशेचर्मकाराः शिल्पिनः खगवासिन.मत्स्यादाश्चनराः सर्वेगम्यान्द्यारजस्वलाः । पर्वतेमद्यपानार्यैनैतेदण्डस्यचार्हकाइत्यादि पठन्तिच पृथिव्यास्त्रिपुभागेषुमांसभक्षणा माचरेत् यत्तु बृहत्प्रचेतोवचनम् । कदेशानांनविप्राणांनयुगानांद्विजोत्तमाः । धर्मं शास्त्रेपुवैभेदोबृहस्यमांसभक्षणइति । तद्दक्षिणव्यतिरिक्तदेशविषमित्यविरोधः किञ्चयद्येवन्नाम्नर्भविष्यतद्यग्नीषोमीयम्पशुमालभते छागोस्तस्येषानालभ्येत्यादिविहितहिंसाप्रतिपादकानिषावयान्यनर्थकान्यभविष्यन्निति तस्मात्पशुवधासंभवेक्रीत्वाल्लब्ध्वेति सूक्तमितिसिद्धं । इदानीं भगोरभक्षिरिच्छागपर्यंतेफपतत्रिणाम् । मांसंविशागाशशयोकरीचक्रमतः सुराम् धिनोतिचपितॄंश्चैवमांसान्पायसमेवचेत्यादिवचनविहितांतृप्तिमुपक्रमते ॥

## मू० मासद्वयन्तुमत्स्यैः ॥ ८ ॥

मत्स्याःपाठीनाद्योविहिता ननिषिद्ध . तैर्हिंमासद्वंतृप्तिरित्यर्थः । तथाचमनु. । द्वौमासौमत्स्यमांसेनेति तुशब्दोविशेषणार्थः तेनमत्स्यविशेषेकालविशेषइत्यर्थः तथाचापस्तंबः शतवलेर्मत्स्यस्यमांसेना-

यत्रात्तृप्तिरिति यत्तु मत्स्यैश्चतुरो मासानिति पैठीनसिवचनन्तच्छ-
शल्कविषयम् । तथा च यमः । शशल्कांश्चतुरो मासानिति । प्रीणा-
यन्तीति शेषः । ननु च मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसे-
दिति प्रायश्चित्तस्योक्तत्वात् कथमेवमिति उच्यते तस्य नित्यभोज-
नविषयत्वादेवमपि च निवेदनविषयत्वाच्च तथा चागस्त्यः । श्रुतेयो-
ऽव्यकव्याभ्यां मत्स्यमांसमश्नुते लभते पातकमसौ सर्वमांसाशिना-
षणाम् । काश्यपोऽपि । कालशाकञ्च मत्स्यांश्च परमान्नं तिलोदनं ।
अनिवेद्य न भुञ्जीत पितृणां दैवतैः सहेति एवं तर्ह्येकतः सर्वमांसा-
नि मत्स्यमांसानि चैकतः एकतः सर्वपापानि ब्रह्महत्या तथैकतः ।
तथा मत्स्यादः सर्वमांसादः इत्यादि वचनद्वन्द्वानिरर्थकमिति मैवं-
वोचः कार्त्तिकादिकालविशेषविषयत्वेन सामर्थ्यकत्वादेकादश्यादि-
दिने निषेधकत्वाच्च । तथा च नारदीये न मात्स्यं भक्षयेन्मांसं न कौर्म-
मन्यदेवचैति कार्त्तिकादिवैशाखकाल इति शेषः । मत्स्यादाश्च नराः
सर्व इति मध्यदेशे बृहस्पतिनोक्तं । किञ्च एकत इत्यर्थान्तरम् । स-
र्वमांसानि भक्ष्याभक्ष्याण्येकतस्तथा भक्ष्यमत्स्यमांसानि चैकतश्च तथा
पापानि सर्वं ब्रह्मा: एकतः हत्या ब्रह्मज्ञानं च कवेति पापायश्चादिक-
कर्मेति श्रद्धकल्पावली हत्यास्याद्ब्रह्मनेच्छानइति चन्द्रगोमी एकतश्च
मादिसर्वमांसान्येकतः मत्स्याः एकतश्च सर्वेभ्यः एकतश्च ब्रह्मज्ञानमेकतस्तु-
लायां समानमित्यर्थः । तथा च प्रचेताः याभिस्तृप्तिः पितॄणां स्याद्गवा-
श्वैर्न सादिभिः सा भवेन्मत्स्यमांसेन दत्तेन श्राद्धकर्मणीति तस्माच्छ्रा-
द्धे मत्स्यैः पितॄन् सन्तर्प्य स्वयमपि भुञ्जीतेति निरवद्यम् । तथा च ब्रह्म-
पुराणम् हव्यकव्यार्थतो विप्रान्भोजयित्वा विधानतः वैसारिणां-
स्तु भुञ्जानो न लिप्येतेन सद्द्विजइति । मत्स्यानाहव्याघ्रलक्षः राजी-
वान् राजगुण्डांश्च सशल्कांश्चैव सर्वशः महोपि राजीवान्सिंहतु

षडांश्च सशल्कांश्चविशेषतः । पाठीनरोहितौ भक्ष्यातेमत्स्येष्वतिघा वनादृति । राजीवाःपद्मवर्णाः सिंहतुण्डाः सिंहमुखाः सशल्काः ए-ल्याकाराश्रयवयुक्ताः आद्यकर्ण्योपि शशश्चमत्स्येष्वपिहि सिंहतुण्ड-श्च रोहिताः । क्षुद्रम स्येषुक्तोतिसेध्यो रोहितश्चतइति निदि-द्धमत्स्यानाहसएज । गोमत्स्योगुच्छ्मत्स्यश्च चर्मकाराह्वयस्तथा नैतेद्विजातिभिर्भक्ष्यास्तथा चिलिचिमाभिधः । शृङ्गीन्नकेचिदि-च्छन्तिप्रशस्तोन्हव्यकव्ययोः श्चयंनिकल्पोनित्यभोजने व्यवस्थितः । प्रावृषकादौ तथा मत्स्यश्चिलिचिमो नाम नभक्ष्योद्विद्विजन्मनां चिलिचिमः सितगौरोनरवाङ्गसदृश. समुद्रजइत्यायुर्वेदः । ना-न्द्यावर्तोलिमत्स्यइल्लिषइत्यांग विसवट कगाहिप्रभृतयः क्षुद्रमत्स-श्चसञ्चत्यन्तरेतावदेवावगन्तव्याः ॥

## सू० मासन्त्यस्तुहारिणेन ॥ ८ ॥

हरिणस्यामृगस्तन्मांसेन त्रिमासन्तृप्तिरित्यर्थः । एषः कृ-ष्णमृगः प्रोक्तस्तान्नोहरिणउच्यतेइति श्रुत्युत्तरत्वात् । छागस्यौरे-णाश्चिकटसे तयोश्चोपनाः चतुरोमासानुरूपणाशरेणेति । यत्त्वष्टा-वेणेयेनेतिपैठीनसिनोक्तम् अष्टावेणेयमांसेनेतिच मनुनातत्पूपर रूप्याशरविषयमतुमर्थेति । हूपरस्त्वविशिष्टोक्तेः अन्यथोशनसा-विरोधात् । तथाचोक्तम् स्मृतिद्वैधेतुविषयः कल्पनीयः पृथक्पृथ-गिति । रुपरोविशेषार्थः तेनमृगविशेषेकालविशेषइत्यर्थ । तथा-चमार्कण्डेयः करोतितृप्तिन्नववैणरो मांसंनसंशयः । रुरु.शम्बरः शरटिगलितशृङ्गइत्यायुर्वेदः । मनुरपि रौरवेणनवैवतु वन्तु रुरुः प्रोमातिपच्चेइति यनोर्तायश्चपच्चरौरवेणेति । गोभिलसूत्रम तदङ्गशास्त्रं मृगपक्षविषय चतुर्नर्दैवलेनोक्तम् । त्रीन्मासानुरुभि

मृगैरितितद्धरिणसदृशरुरुविषयम्। नचयथा दृष्टाविपर्ययोविकल्पः शक्यतेवक्तुं गृह्याणामनेकत्वात्तद्विषयानुपलब्धेः। तस्मान्नोपदिष्टविपर्ययोविकल्पोभवतुमर्हति। मार्कण्डेयः पुष्णातिचतुरोमासाञ्छशस्य पिशितंपितॄनिति यत्तुदेवलेनोक्तम् शशैःपञ्चमासान्मत्स्यैस्तृप्तिरिति मत्स्यैःप्रीणातिचतुरोमासानितिचवदेनतद्दृश्यविषयमिति अविरोधः अन्यथाविरोधाद्धर्मशास्त्रप्रामाण्यमिति। तथाचव्यासः धर्मयोर्बाधकोधर्मोनसधर्मः कदाचन। अविरोधात्तुयोधर्मः सधर्मः परिकीर्त्यते। तस्माद्विरोधेधर्मस्यनिश्चित्यगुरुलाघवं। तयोर्भूयस्तरं ज्ञात्वा कुर्याद्धर्मविनिर्णयं तत्वविप्रतिपन्नानां वाक्यानामितरेतरं। विरोधपरिहारोविनिर्णय तत्वदर्शिनइति। मयशशायदजातेरनेकत्वादेवं नघटतइतिवाच्यम्। तथावामनः कदलीकन्दलीचीनश्चमूरप्रियकावपि समूरश्चेतिहरिणाअमी अजातयोनयः। कृष्णसारस्त्र्यंकुरः कुशम्बरोहिणाः गोकर्णपृषतैणश्च रोहिताश्चमरोमृगाः गन्धर्वःशरभोरामः सृमरोगवयः शशादयोमृगेन्द्राद्याइति। एवमन्यत्रापि॥

## मू॰ चतुरऽऔरभ्रेण॥ १०॥

पितॄणान्तृप्तिरित्यर्थः। तथाचमनुः अरणयोथचतुरइति उरभ्रश्चारण्यमेषः नत्रमेषमांसेनेति ग्राम्यस्यवच्यमाणत्वात्। अन्येरग्राह्ममेषएवेति। तदयुक्तम् स्मृतिविहितत्वात्पौनरुक्त्यदोषाच्च तथाचस्मृतिः। पञ्चमासांस्तुमेषेणइति यत्तु मेषेणपञ्चमासानिति पैठीनसिनोक्तम्। तदारण्यस्तपविषयं अत्रैतत्सन्दिह्यते किंगवदमांसंभक्ष्यमभक्ष्यञ्चेति तत्रैकआहुः विहितत्वाद्भक्ष्यमिति तथायमः। गावयंरुद्रसम्मितान् एकादशमासांस्तृप्यन्तीतिशेषः मार्क-

गडेयोपि गवयस्यनुमांसेनतृप्तिःस्याद्दश मासिकीति तदयुक्तम् श्रुतिविरुद्धत्वात् तथाचश्रुतिः । सयंपुरुषमालभन्तस किंपुरुषोभव द्यावश्वंगाश्चतौगौरश्चा गवयश्चाभवनांयम विमालभन्तसउष्ट्रो-भवद्यमजमालभन्त सशरभो भवत्तस्मादेतेषां पशूनां नाशितव्यम-पक्रान्तमेधाह्येतेपशवइति । श्रुतिस्मृतिविरोधेतु श्रुतिरेवगरीयसी-तिश्रुतेर्बलवत्त्वाच्च । नचश्रुतिविरुद्धस्मृतिरादरणीया तथाचचतु-र्विंशतिमतं स्मृतिर्वेदविरोधेन परित्याज्यायथाभवेत् । तथैवलौ-किकंवाक्यं स्मृतिबाधापरित्यजेदिति श्राद्धविषयत्वेन गवयस्यवि-धिरित्यन्ये । अत्रानूचानाःप्रमाणम् ॥

## सू० पञ्चशाकुनेन ॥ ११ ॥

शाकुनिर्भक्ष्यपक्षीतन्मांसेनेत्यर्थः । तथाचमनुः शकुनेनाथप-ञ्चैवइति । यत्तु शाकुनैश्चतुरोमासानिति देवलेनोक्तम् यच्चचतुरः शाकुनेनेतिचगोभिलेन तद्विहितप्रतिषिद्धहारीतादि पक्षिविषयं यच्चशकुनेनसप्तेति पैठीनसिनोक्तम् तदतिपवित्रकपिञ्जलादि पक्षिविषयं सोमपानोद्भवत्वेन पावित्र्यात् । तथाचश्रुतिः सयत्सो-मपानमासततः कपिंजलःसमभवदिति । जातूकर्णरपि गौरःक-पिंजलोमेध्यः ह्लकपालावर्णहीनइति । वर्हीनीलकण्ठः सुमेधाः किञ्चिल्लोहितवर्णेति दीर्घपुच्छोगुरुतरः । कृष्णचोटिस्तुयःपक्षीस-मज्ञोलेतिपावनइति सोटिश्चंचुः भक्ष्यानाह शङ्खः तित्तिरञ्च-मयूरञ्चलावकञ्चकपिंजलम् वार्ध्रीनसंपक्षंकंचभक्ष्यानाहयमः सदा सदेतिश्राद्धादेरन्यत्रापि जावालः भक्ष्यःकपिंजलोनीलग्रला-टीवन्यपदायुधाः भक्ष्याविति नीलःश्यामतित्तिरिः कपिंजलोगौ-रः वन्यपदायुधोवन्यकुक्कुटः वनेजलेभवो जलकुक्कुटइत्यन्ये तत्र

कलविङ्कं प्लवं हंसमिति मनुना प्लवशब्देनतस्य निषिद्धत्वात् च-क्रवाकं प्लवङ्कोकमिति शङ्खनिषेधाच्च भारद्वाजः मांसेनेति कात्यायनोक्तेर्भरद्वाजो भक्ष्यः यत्तु नखादिस्तु भरद्वाजमिति सुमन्तुनोक्तम् तद्भरद्वाजोन्यङ्कुविषयः कौञ्जिडिथा इति प्रसिद्धः तथा च निघण्टुः वटीवटकदन्त्वात्रो भरद्वाजोन्यङ्कुः वटङ्गोग्यो द्वितीयस्तु खञ्जरीविमपुच्छकः इति सुमन्तुः भक्ष्यास्तु नीलकण्ठ, श्याहरीतो लावतित्तिरौ हारीतो विहितप्रतिषिद्धः। कुक्कुटहारीतभक्षणे द्वादशरात्रमनाहार इति शङ्खप्रतिषेधात् अन्यस्मृतिभ्यो ज्ञेयम् वर्ज्यानाह मनुः क्रव्यादः शकुनीन्सर्वांस्तथा ग्रामनिवासिनः अनिर्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्जयेत् । कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम् सारसं रज्जुदालञ्च दात्यूहं शुकसारिके । प्रतुदाञ्जालपादांश्च कोयष्टिनखविष्किरान् निमज्जतश्च मत्स्यादान्सौनं वल्लूरमेव च । बकं चैव बलाकांश्च काकोलं खञ्जरीटकम्। मत्स्यादान्विड्वराहांश्च मत्स्यानेव च सर्वश इति । क्रव्यादो गृध्रादयः ग्रामवासिनः पारावतादयः अनिर्दिष्टभक्ष्यत्वेनाज्ञातः एकशफाश्चश्वादयः टिट्टिभो निष्ठुरशब्दभाषी टिटिहिरीति प्रसिद्धः, कलविङ्को गृहचटकः प्लवो जलकुक्कुटः चक्राह्वः चक्रवाकः रज्जुदालो वनकुक्कुटः दात्यूहः कालकण्ठः प्रतुदः श्येनः जालपादा जालाकारपादाः कोयष्टिः शिखरी नखविष्किराश्चकोरादयः निमज्जन्तो मत्स्यादाद्भि मज्ज्यमत्स्यदा काकोलो गिरिकाकः मत्स्यादाश्च निमज्जन्तोपि पन्थेप्रसिद्धः दैत्यलः उलूककुररश्येनगृध्रकुक्कुटवायसाः चकोरः कोकिलो रज्जुदालकश्च कामभक्ष्यौ पारावतकपोतौ वनभक्ष्याः पक्षिणो स्मृताः । अत्राह कारापिकान् कपोतञ्च लोतकं रक्ततुण्डकम् सकृप्रजं सारिकाञ्च कलविङ्कञ्च वर्जयेत् कारापिका शकुनशास्त्रो-

ता: स्तोतकश्चातक: रक्ततुण्ड.शुक: नक्तंप्रज:काक: लोमश:ग्रामकुक्कुट: । आतापीमांसानपिवर्जयेत् आतापीचिल्ल:वेदनिधि: काकारिपिङ्गलाक्रौञ्च: वर्कोटीटिट्टिभारसौ चाषभासौ भृङ्गराजस्थान्द्रजन्मध्यात्तस्यचरेत् काकारिरुलूक: पिङ्गलामुखूसरइतिप्रसिद्ध: वर्कोटीवक: चाषोनीलपक्षी स्वर्णपक्षीतिप्रसिद्ध: जग्ध्वाप्राश्यचान्द्रञ्चान्द्रायणमित्यर्थ: । गङ्गा.हंसप्लवञ्च कङ्काकङ्कोलङ्गशरीटकाम् मत्स्यादांश्चतयामत्स्यान्वलाकांशुकसारिके । चक्रवाकप्लवङ्गाकम्पराण्डकम् जगङ्कपिम् मासमेकंव्रतङ्कुर्यादेतांश्चैवनभोजयेत् मद्गुर्जलवायस: व्रतञ्चान्द्रायणम् मत्स्यव्यवस्थाप्रागुक्ता निषिद्धमत्स्याशन इत्यर्थ. । धौम्य: पारावतंरथांगञ्चमरालञ्चकुलिङ्गकम् जग्ध्वाष्टिकुक्कुटंग्राम्यंव्रतेनापिनशुध्यति रथांगश्चक्रवाक: मरालोहंस. कुलिङ्गकोव्रतेनचान्द्रायणेनेत्यर्थ.अन्यत्स्मृतिभ्योज्ञेयम ।

## मू॰ षट्छागेन ॥ ११ ॥

पितॄणांतृप्तिरित्यर्थ: तथाचमनु: । षण्मासञ्छागमांसेनेतिछागोमहोक्ष: वार्ध्रीनसाद्न्य: तद्विधेर्विशिष्टत्वात् । यत्तु । छागलंसप्तैमासानिति मार्कण्डेये नोक्तम् तदारण्याजविषयम् तथाचश्रुति: । सोमायकुलुङ्गआरण्योजइति । यच्चनचत्वार्यंयजेनत्वितिदेवलेनोक्तम् तद्वार्ध्रीनसव्यतिरिक्तपत्तिविषयं यत्पुनर्द्वादशमासांछागेनेति पैठीनसिनोक्तम् तत्तूपराजविषयम् तस्यातिपावनत्वात् तथाचसमहोक्षेतिपावनइतिप्रागुक्तमित्यविरोध: ।

## मू॰ सप्तकौर्मेण ॥ १२ ॥

कूर्म:कच्छप.स्तन्मांसेनेत्यर्थ: तथाचदेवल. कूर्मे.स्यात्सप्तमासिकी

चस्कन्दमस्वादे अस्तेष्वपि गोधूमयवगोरसविक्रिया: तथा मांस-
विकाराश्चदधिक्षीरगुडस्यचेति । भक्षयेदितिशेषः ।

## सू० दशमाहिषेण ॥ १५ ॥

तृप्तिरित्यर्थः तथाचदेवलः । दशमाहिषमांसेनेति । यत्त्वे-
कादशमासान्माहिषेणेति पैठीनसिनोक्तन्तदारण्यविषयंतूपरविष-
यं ग्राममहिषभक्षणञ्चदेशविशेषेव्यवस्थितम् तथाचयमः । कासरो-
हिणगिरौमेध्याइति प्राहप्रजापतिरिति कासरोमहिषः । ननुचप-
भक्ष्याः पशुजातीनाङ्गोखरोष्ट्राः मकुञ्जराः सिंहव्याघ्रार्क्षशरभाः ।
सर्पाजगरकाद्याश्च शशमूषकमार्जारनकुलश्वाध्यसूकराः सृगा-
लशृगभल्लीपिगोलांगूलमर्कटाइति तथा वार्द्धीदंशनारसखरका-
रंचरासभ । क्रौंचलौमशिकमांसञ्चगध्वाभशतिशिट्क्रमिः । वेगरो-
हुगजवाग्वृत्तभास्कारिमाचक्षे रासभम्प्राश्यचभक्षेद्विट्क्रमिर्भवे
भवइतिदेवलव्याघ्रपादप्रभृतिवचनैरभक्ष्यमध्येमहिषानुक्तेः
सार्वत्रिकमहिषभक्षणंस्यादितिचेत् मैवंभाषीः गिरिसन्नी-
पातस्यग्रामसञ्चारिदोषाभक्तः । तथाचभारद्वाजः । शशमूषकसर्पाश्चमे-
ष्मंचगिरिंविना । अभ्याहिजानगुश्यन्तिमायश्चित्तायतेरिति ।
तस्माद्देशविशेषपर्यवसायत्वं व्यवस्थितमितिसूत्रम् वार्द्धवापिभंड-
र्डीजलपशुस्तस्य । जनमानुषमत्येके । नरस्मानुषम् वार्द्धीरिग-
व्याघ्रयानांसिंहाव्रकयव्हिसकादीनां कारह्यारिणां क्रौंचाब्लयः
[illegible] लोमशकम् सिट्क्रमि-
विशक्रिमिः । द्वीपीव्याघ्रविशेषः गोलांगूलोवानरविशेषः मर्क-
टश्चमरवादिप्रभृत्वनोपलक्षणम् ।

## सू० एकादशपार्षतेन ॥ १६ ॥

पृषतोधवलमृगस्तन्मांसेनेत्यर्थः । तथाचगोभिलः एकादशपार्ष-

तेनेति । तत्र तदनन्यम् पृषतशब्देनकिञ्चिद्गुणोवाच्यः किंवाचित्र मृगजातिरिति तत्रयदिचित्रगुणोवाच्यःस्यात्तर्हिरुरुच्छागादीनामपि पृषतः गुणएकादशमासतृप्तिहेतुः स्यात् । ततश्चविहिताः सर्वेपि पृषताः समाः एकादशमास तृप्तिहेतवइत्यर्थः स्यात् । अथपृषत-शब्देनचित्रमृगजातिर्वाच्यं स्यात्तर्हितज्जातेरेव श्राद्धेकस्यचिद्दृष्टपृषतत्वे एकादशमासतृप्तिहेतुत्वं नस्यात् प्रत्युतविहितजातेः परित्यागश्चेत्यर्थःस्यात् ।तस्मात्पृषतशब्दस्यकाचङ्गतिरित्याक्षेपः हेतुग्रन्थेव्याख्यानतोविशेषः प्रतिपत्तिरितिन्यायेनव्याख्यातचित्रमृगशब्दोवैतदर्थावस्तुत्वात्त्वित्रमृगस्यैव तावन्मासतृप्तिहेतुनान्यस्येति एवंसतिमृगशब्दस्या न्वेषणाच्छागादिवाचकत्वा भावात्पृषतत्वे सत्यपिनतस्यान्वयोयुक्तः तस्माच्चित्रमृगैश्चैवतावन्मासतृप्तिरिति सिद्धम् । ततश्चपञ्चन्त्यपिपार्षतैः पार्षतेनेहसप्तवैनवमासान्मापतेनएकादशपार्षतेनेति देवलमनुपैठीनसि कात्यायनवचनानां विषयानुपलब्धेविकल्पाएव शक्यन्तेवक्तुंनविषयाः । अथवासर्वस्मृगजातिषुपृषतत्वं विशेषस्तेनैकादशेतिसर्वेभ्य स्तृप्तिराधिक्यमित्यर्थः तत्रैवेत्रविषयः । पञ्चतृप्यन्तिपार्षतैरिति देवलवचन हरिणमात्रस्यचित्ररुरुविषयं पार्षतेनेहसप्तवाइति मनुनोक्तंमच्छागस्य पृश्निचित्ररुरुविषयं । नवमासान्पार्षतेनेति पैठीनसिनोक्तं वरचित्ररुरुविषयं एकादशपार्षतेनेति चित्रतूपरविषयमित्यविरोधः अयमाशयः ।यान्मासान्रुरुभिर्मृगैरिति त्रिमासतृप्तिविषयस्य रुरोःपृषतत्वेन पञ्चतृप्यन्तिपार्षतैरिति तृप्तिविशेषः रुरुःप्रोक्षातिपञ्चकैरिति पञ्चमासतृप्तिविषयस्यतु रुरोःपृषतत्वेन एकादशपार्षतेनेहसप्तवैइति तृप्तिविशेषः । रौरवेणनवैवास्तिति नवमासतृप्तिविषयत्वेन एकादशपार्षतेनेतितृप्तिविशेषः । सर्वेपृषतानांन्तूपरत्वेसति अनन्ता-

तृप्तिरिति । अनन्ताखड्गमांसेन लोहछागाच्चतृप्तरादिति वच
चनादेवविषयविभागो दक्षिणमेषशरीरसंहितपशूनाम् उपपत्त्या-
संभवात् एवङ्कल्पनागौरवमप्ययुक्तम् । प्रमाणफलमनिदोषाभावात्
तथाचाङ्गिरा: । प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः । सीद-
न्तिहिप्रमाणानि प्रमाणैरव्यवस्थितैः भट्टोपि । प्रमाणेष्वनिरू-
प्यानि सामान्यानि बहून्यपि अदृष्टशतभागोपि

तथाचविष्णु संवत्सरन्तुपयसा तद्विकारेणवेति। अपिचमार्कण्डेय' संवत्सरन्तथागव्यम् पय.पायसमेववेति। आदित्यपुराणे विविध-पायसन्दद्यादिति तथामासविकाराश्च दधिक्षीरगुडस्तेतिवचनात् पयोविकारा कूर्चिकाक्षीरवटकादय ॥

## मू॰ वार्ध्रीनसमांसेनद्वादशवर्षाणि॥ १९॥

तृप्तिरितिशेष वार्ध्रीनसस्त्रिविध तथाचविष्णुधर्मोत्तरे। त्रिपिबन्त्विन्द्रियक्षीणम यूथस्यायण्णन्तथा। रक्तवर्णन्तुराजेन्द्र छागम्वार्ध्रीनसंविदुरिति मुखकर्णौजलपानेपतन्तौ जलन्त्रिपिब इत्यर्थ। त्रिपिबन्त्विन्द्रियक्षीणम् श्वेतंवृद्धमजापतिम्। वार्ध्रीन सन्तुतंप्राहु याज्ञिका पितृकर्मणीत्यन्यत्र निगमोपि। कृष्णग्रीवो रक्तशिरा. श्वेतपक्षोविहङ्गम सवैवार्ध्रीनस प्रोक्त इत्येपानैगमीश्रु-तिरिति। अत्रानूचाना प्रमाणं रक्तवर्णोवार्ध्रीनसो ऽक्षयतृप्ति विषयोवेत्यविरोध वार्ध्रीनसमहाशल्को लोहाजस्तूपरोऽव्रत। आ-नन्त्यायभवेदत्तइति वचनात्। लोहामिषमहाशल्क मांसवार्ध्री-नसस्यवेति याज्ञवल्क्यवचनाच्च। वार्ध्रीनसशब्देपक्षोच्चारणमना-लोचित। उद्दीप्तग्रीवान्वार्ध्रीनसस्तेमत्ला अरण्यायदुमरोरुहरौद्र इतिश्रुतेस्तवर्गीयपाठात्। श्राद्धशिष्टस्यामांसस्यावश्य भक्षणमव-गन्तव्यम्। तथाचविश्वामित्र धर्मशास्त्रात्तुविज्ञाय भव्यश्चार्थेष्व सेवया प्रदायपितृदेवेभ्यो भुञ्जीतातिथिपूर्वकमिति। अत्रमांसाद्भि भोजनेभुञ्जीतेतिनियमार्थ। तथाचोपमन्यु छगलादिचभागस्यां मांसशाकादिभिर्व्यवर्दिति। पवित्रताभिधानादिति ॥

इति श्रौताश्रवकारिकायां मूलसत्तो श्लिकार्थसामान्यं समाप्तमिति॥

सामीकण्डिकासमाप्ता॥

इत्थं ग्राम्यारण्यौषधिमूलफलै रनेकमत्स्यमांसैश्च तृप्तिमभिधाया-ऽधुनाचय्यतृप्तिंविवक्षु.सूत्रमारभते ।

## मू० अथाक्षय्यतृप्तिः ॥ १ ॥

अथशब्द.प्रश्ने कार्त्स्न्ये वा अक्षय्यातृप्ति.कथङ्किं वाक्षय्यतृप्ति-कारन्द्रव्यमिति प्रश्नमित्यर्थं. कार्त्स्न्ये नाक्षय्यतृप्तिरुच्यतइतिवार्थ. । अक्षय्योनन्तता तथाचमनु. कालशाकमहाशल्क खड्गोलोहा-मिषंमधु । आनन्त्यायैवकल्प्यन्ते मुन्यन्नानिचसर्वशइति । प्रश्नोत्त-रमाह ।

## मू० खड्गमांसंकालशाकंलोहच्छाग-च्छमांसं ॥ २ ॥

खड्गस्तु.गर.खड्गमृगस्तन्मांसंनिषिद्धएणादिव्यतिरिक्तम् । तथाचविष्णु कालशाकमहाशल्कोमांसंवार्ध्रीनसस्यच विषाण-वर्ज्यायेखड्गानासूयतांस्तुभक्षाइइति यत्तुखड्गमांसेनत्रयोदशमा-सानितिपैठीनसिनोक्तन्तत्सम्रृगविषयम् लोहःसर्वलोहितछाग तथाचपैठीनसिः सर्वलोहछागेनानन्त्यमिति लोहितशब्दोत्रावयव-वृत्ति. एवमादिद्रव्यमक्षय्यतृप्तिकारमिति पूर्वप्रश्नस्योत्तरमित्यर्थः । खड्गलोहितयोर्मध्येकालशाकोक्तिस्तत्तुल्यफलार्थ. ।

## मू० मधुमहाशल्कः ॥ ३ ॥

मधुमाक्षिक महाशल्कोमत्स्यभेदः महसेनइतिमध्यदेशेप्रसिद्ध. महाशल्कामहाकालिनोमत्स्याइतियमस्मृति.श्वइश्चिवइइसिय स्यरूढिरितिहलायुध.टेकार्याद्वौप्रसिद्धइतिकल्पतरु.कंबलाख्यइ-तिकश्चित् शल्कोवेत्यन्ये एवमनेकविप्रतिपत्तौपुरस्योक्त एवाद-

र्त्तव्यः एकश्चलक्षोऽङ्केचन्द्रश्चललाटेखड्गसंयुत:शुक्लवर्णस्तुमतृष्यो-
हिमहागलक.सउच्यते इति अत्रे कश्चाहुः । कलौश्राद्धे मधुनिषि-
द्धमिति । तथाचश्राद्धे मांसन्तथामध्विति लिखितस्याक् । तन्नवि-
चारसहम् निबन्धकृद्भिर्निर्मूलप्रतिपादनादित्युक्तम् । कलौर्विधाय-
कवचनोपलब्धेश्च तथाचपैठीनसिः परमान्नं कालशाकम्मधुमांसं-
घृतम्पयः मुन्यन्नानितिलाविप्रा:प्रकृत्याऽग्निरष्टधा । शस्तान्यष्टौ-
तुसर्वेषुयुगेषुमुनिसत्तमाः पितृणांदेवतानाञ्चदुर्लभानिकलौयुग-
इति । परमान्नम्पायसम् । देवलोऽपि दर्भांस्तिलागजच्छायादौहित्रं
मधुसर्पिषी कुतपोनीलकण्ठ श्चपवित्राणीहपैतृके कुहकलौ तथा
तुलसीमधुदर्भाश्चतिला:सर्पिर्मृगामिषं एतन्मेध्यतमन्नित्यंसदा-
चाराश्रयेद्द्विजाइति सुमेधाअपि विमांसंविमधुश्राद्धन्विष्टतस्मौलि
भोजनम् विनासमलरङ्कामोव्योमालिङ्गनवन्वयमिति ॥

## मू० वर्षासुमघाश्राद्धम् ॥ ४ ॥

वर्षातोमघानक्षत्रे श्राद्धमक्षय्यतृप्तिकृदित्यर्थः एतच्चापिण्ड-
कं ज्येष्ठपुत्रिणाकर्त्तव्यं तथाचदेवीपुराणम् तत्रापिमहतीपूजाक-
र्त्तव्यापितृदैवते अत्रेपिपिण्डप्रदानन्तुज्येष्ठपुत्रीविवर्जयेदिति तथाम-
घायांपिण्डदानेनज्येष्ठ:पुत्रोविनश्यतीति अत्रैकश्चाहुः ज्येष्ठ:भ्रा-
तृगर्भोऽद्भवद्भति । तदयुक्तम् । तद्व्यतिरिक्तासत्त्वापिज्येष्ठत्वात् तथा-
चशातातपः अनाद्यपुत्रोजेष्ठोपिभ्रातापुत्रोनिगद्यतइति अत-
श्च ज्येष्ठपुत्ररहितेनमघायासपिण्डमेवकर्त्तव्यमितिगम्यते । महा-
फलत्वात् एतच्चमघान्वितदिनान्तरेनत्रयोदश्यांमघायांपिण्ड-
दानेनज्येष्ठपुत्रोविनश्यति. कनीयांस्तुत्रयोदश्यांचयाहाभ्युदयाहते
इतुरभययोगोपुत्रिमावस्यपिण्डनिषेधात् अथवाविभक्तभ्रातृणापौत्र

स्येचपुत्राभावे श्राद्धफलत्वात्पृथक्पृथगधिकारः । तथाचपैठीनसिः
अत्रापिपितृगीतागाथाः छागेनसर्वलोहेनवर्षासुच मघासुच पुनः
वायेद्दिवापौत्रोयोनोददात्त्रयोदशीमिति । तथाविभक्तावाविभक्ता-
वाकुर्युःश्राद्धमदैवतम् । मघासुचततोन्यत्रनाधिकारः । पृथग्विभ-
क्तैस्तत्रचयाक्तैकोद्दिष्टं पृथक्तदुभयत्रान्वेविभक्ताअविभक्तावादैवंम-
घासुचश्राद्धं पृथक्कुर्युः ततोन्यत्रपृथग्विनानधिकारइत्यन्वयः । अथ-
वाततइतिसार्वविभक्तिकस्तसिः । ततोविनादैवतंमघाश्राद्धंविभा-
न्यत्रश्राद्धंनाधिकारइत्यन्वयः । उभयान्वयेपिद्वयोरमघाश्राद्धयोरे-
वविभक्ताविभक्तयोः पृथक्पृथगधिकारोन्यत्रनकिंत्वविभक्तैर्नैवैकश्रा-
द्धं कर्त्तव्यन्नपृथगित्यर्थः । तथाचप्रचेताः । अर्वाक्संवत्सरात्सर्वेकुर्युः
श्राद्धं समेत्यवै । संवत्सरेव्यतीतेतुकुर्युःश्राद्धं पृथक्पृथक् । पठन्ति
च । एकादश्यामघासुयोजीवश्च विधिवत्क्रिया । कुर्युर्न्नैकेनागः
श्राद्धमाब्दिकन्तुपृथक्पृथगिति । किञ्च नवश्राद्धं सपिण्डत्वं श्राद्धा-
न्यपिचषोडश । एकेनैवतुकार्याणिसविभक्तधनेष्वपि । अविभ-
क्तादविभक्तोपिविनेरङ्गिवचनात् यत्तु विभक्तास्तुपृथक्कुर्युःप्रतिसंव-
त्सरादिकम् एकेनैवाविभक्तेषुकृतेसर्वैस्तुतत्कृतम् यच्चभ्रातॄणाम-
विभक्तानामेकोधर्मःप्रवर्तते । विभागेसतिधर्मोपिभवेत्तेषांपृथक्पृ-
थगितिवचनादविभक्तानामप्येकत्वादावेकमेव कुर्वन्तितदशक्तविषय-
मित्यविरोधः । वर्षास्वितिचन्द्रमासाभिप्रायं ननुवर्षास्वित्यभिधा-
नान्माघस्यापि कथंतत्रैकमासिमघाश्राद्धमितिसन्देहः । नैवं ।
अपरपक्षेश्राद्धमितुपक्रमात्दित्यदोषः । अतश्चापरपक्षमघायामिति
तथाचवृद्धयाज्ञवल्क्यः । याघ्रंवापैतृकंत्रापिपितृपक्षेविशेषतः तत
सङ्क्रमनं कुर्यात्पितृणां पुष्टिदःसदेति ।

## मू० मन्त्राध्यायिनःपूताः ॥ ६ ॥

पङ्क्तिपावना इति शेषः। मन्त्रशब्द संहितावचन बहुवचनमेकद्वित्रियपेक्षं ऋग्वेदाद्यनेकसंहितापेक्षंवा मन्त्राध्यायिस्वमात्रे णैवकेवलम्पङ्क्तिपावनाएतेपूताइतिविशेषणं। तच्छौचित्वादुत्तरत्रापिसार्वत्रिकम् मनोवाक्कायकर्मभिः। शास्त्रोक्तप्रत्याश्रयेननिषिद्धवर्जनेनचवाह्याभ्यन्तः शुद्धियुक्ताः पूता. इत्युच्यन्ते। अथवापूताः पञ्चविधाः। तथाचविष्णुः। तीर्थपूतोयज्ञपूत.पयःपूतः सत्यपूतोमन्त्रपूतइति उच्यते ॥

## मू० शाखाध्यायी ॥ ७ ॥

पूतः पङ्क्तिपावनइतिशेषः शाखाशब्दोमन्त्रब्राह्मणात्मकवेदापेक्षः। अंगानावक्ष्यमाणत्वात्। तथाच शङ्खः यजुषांपारगो-यश्चऋचांसाम्नाञ्चपारग. अथर्वशिरसोध्येताब्राह्मणा. पङ्क्तिपावना इति।

## मू० षडङ्गवित् ॥ ८ ॥

षडंगोवेदस्तमर्थत. पाठतश्चयोवेत्तिसपूतस्तादृशइतिशेष. अनूचानइत्यर्थ. तथाचस्कन्दसंवादे अनूचाना श्रोत्रियाश्चब्राह्मणाः पङ्क्तिपावनाइति शिक्षाकल्पोव्याकरणन्निरुक्तञ्ज्योतिषांगतिः छन्दोविचितिरित्येते षडंगोवेदउच्यते। अत्रमन्त्राध्यायिन प्रभृत्येतावत्पर्यंतगुणाधिक्योपक्रमादुत्तरोत्तरंप्राशस्त्यसूचितम्। यत्तु कश्चिदाह षडंगानितेषामेकंवापियोवेत्तिसएवेति। तन्नोचित बहुव्रीह्युपलब्धेः। अनूचानोक्तिपरित्यागप्रसक्तेश्च। एवंवेदाध्ययनेन पङ्क्तिपावनत्वमुक्त्वातदर्थंभवेषाह ॥

## सू० ज्येष्ठसामगः ॥ ९ ॥

ज्येष्ठसामगशब्दोद्वेधाविवक्षितः तथाहि ज्येष्ठसामसंज्ञकंसाम-त्रयंयोगायतिसतथा अथवा ज्येष्ठसामसंज्ञकांव्रतं तद्योगस्तस्य चरि-तुंजानाति सज्येष्ठसामगः ज्ञानार्थस्यगमेर्डप्रत्ययः । सतश्चज्येष्ठसा मत्रयंगायतायेनतद्व्रतंचीर्णं सज्येष्ठसामगस्तानन्मात्रेणैवपावनत्वर्थः

## सू० गायत्रीसारमात्रोपि ॥ १० ॥

गायन्तंत्रायतइति गायत्री ॥ सैवगायत्रीतांवेदसारत्वेनो-पादायतज्जपादिमात्रपरोगायत्रीसारमात्रः । यथाचविष्णुः । गा-यत्रीजपनिरतइतिअथवागायाः प्राणास्तांस्त्रायतेगायत्रीसैवगाय-त्रीसारमात्रंसर्वमन्त्रभूतं यस्यगमन्त्रान्तरं सगायत्रीसारमात्रः । तथाचश्रुतिः । माहैषागयां ए स्तत्रप्राणो वैगयां स्तत्प्राणां स्तत्रत-दद्गयां,स्तत्रे तस्माद्गायत्रीनामेति । मनुरपि । गायत्रीमात्रसारोपि-वरंविप्रः सुयंत्रितः नायंत्रितस्त्रिवेदोपिसर्वाशीसर्वविक्रयीति । गायत्रीमत्रपारीति कश्चित् अपिशब्दादन्येपिधार्मोक्ताः तथाच-यमः येसोमपाविरजसोधर्मज्ञाःशान्तबुद्धयः व्रतिनोनियमस्थाश्च ऋतुकालाभिगामिनः अथर्वशिरसोध्येतासर्वेते पंक्तिपावनाइति ॥

## सू० पञ्चाग्निः ॥ ११ ॥

पूतस्ताहशइतिशेषः सभ्यावसथ्यौवेतात्रयस्संस्युःसपंचाग्नि-होत्री अथवा पञ्चाग्नयोमनुष्येणपरिचर्याःप्रयत्नतः । मातापिता-चाग्निरात्मागुरुश्चभरतर्षभेतिमहाभारतोक्ताः पञ्चाग्निः पञ्चा-ग्निर्ब्रह्मचारीतिकश्चित् । उपनिषत् पठ्यमानपञ्चाग्निविद्याचि न्त्यः पञ्चाग्निरेकाग्न्युपलक्षणम् तथाचमनुः विनाचिथेत-एकाग्निरिति ।

## सू० स्नातकः ॥ १२ ॥

व्याख्यातचरः दृष्टपुनस्त्वहृगृष्टयब्ह्मचांद्रायणादिव्रतचारिप्राप्तधर्मम् । तथाचयमः । चांद्रायणादिव्रतचरःसत्यवादिपुराणवित् । निष्णातःसर्वविद्यासुयान्तोविगतकल्मषः । गुरुवेदाग्निपूजासुप्रसक्तोज्ञानतत्परः । विमुक्तःसर्वदाधीरोब्रह्मभूतोद्विजोत्तमः । अनमिवोनचामित्रोमैत्रआत्माविदेवच । स्नातकोजपनिरतःसदापुष्पवलिप्रियःऋजुर्दुःखमादान्तःशान्तःसत्यव्रतःशुचिः विदज्ञःसर्वशास्त्रज्ञःउपवासपरायणः । गृहस्थोब्रह्मचारीचचतुर्वेदविदेवच वेदविद्याव्रतस्नातावाह्मणाः पंक्तिपावनाइति ।

## सू० त्रिणाचिकेतः ॥ १३ ॥

पंक्तिपावनइतिशेषःअन्नाकुः । तत्रशब्दवैद्यजश्रवसःसर्ववेदसन्ददायित्यादावनुवाकेचस्तुतौ पठ्यमानेत्रिणाचिकेतनाम्नोमुनिपुत्रस्यप्रश्नत्रयविषयउच्यतेइतिव्यु त्पत्त्याचिनाचिकेतस्तत्पाठकस्तदर्थव्याख्यातापित्रिनाचिकेतइति । त्रिर्चितोनाचिकेतोऽग्निर्येनसइत्यन्यः । तन्नोचितम् । त्रिणाचिकेतशब्दस्ययौगिकस्यपरिभाषिकस्यवाविरुचितत्वात् । तथाहि क्षितज्ञानेधातुःव्रतातिशयेनतपोविशेषेणचत्रयाणवत्सर्वमाचिकेतिजानातीतित्रणाचिकेतः तथाच वृह्मपुराणम् । आचिकेतोतियोविश्वंत्रयवत्सर्वनिस्पृहः त्रणाचिकेतःसगृहीरागद्वेषविवर्जितइति पठन्तिच फलन्मूलदधिक्षीरगोमयांवुह्ताशनः त्रिणाचिकेतउक्तोसौयोन्नं त्यजतिनित्यशइति । अथवा आध्वर्युवेदभागस्तद्व्रतोनियतोद्विजः त्रिणाचिकेत.सज्ञ यस्तद्योगात्पुरुषोपियइतिवृह्मपुराणोक्तोवा ।

(१) त्रिणाचिकेतोयजुर्वेदैकदेशस्तद्व्रतचरन्सइतिकर्क ।
गदाधरस्तु अध्वर्युवेदभागस्तद्व्रततदुभययोधीतेययकरोतिसोपितद्योगात्रिणाचिकेत"

## मू० त्रिमधुः ॥ १४ ॥

नाहयइतिशेषः त्रिमधुऋग्वेदैकदेशस्तद्व्रतञ्चतदाचरणेनतदध्यायीत्येके त्रिमधुरथर्ववेदव्रतन्तस्यारीत्यन्ये। अपरेत्वथोचुः त्रीणिवीणिविद्युदानिविद्यायोनिश्चकर्मच ॥ पुरुषत्रयविख्याता-त्रिमधुः परिकीर्तितइति ॥

## मू० त्रिसुपर्णी ॥ १५ ॥

पङ्क्तिपावनइतिशेषः। त्रिसुपर्णमृग्यजुषोरेकदेशस्तद्व्रतञ्च तदाचरणेनतद्व्रताध्यायीत्रिसुपर्णीत्येके तैत्तिरीयशाखापठितब्रह्मनेतुमात्याटिब्राह्मणास्त्रिसुपर्णं पठन्त्याआसहस्रात्पंक्तिंपुनंतिते सोमम्प्राप्नुवन्तितस्यानुवाकत्रयस्याध्येता ग्रन्थतश्चाध्येतात्रिसुपर्णइत्यन्येथोचुः पितरः समपूर्वेनयज्ञानोभूरिदक्षिणाः। यस्येकुयोमात्ववंशस्त्रिसुपर्णीतिसस्मृतइति ॥

## मू० द्रोणपाठकः ॥ १६ ॥

पूतस्ताहयइतिशेषः। द्रोणशब्दोऽवयववृत्तिः। धर्मद्रोणइत्यर्थः। तथाचगोभिलसूत्रम् धर्मद्रोणपाठकइति धर्मद्रोणोधर्मशास्त्रं। तथाचक्रत्स्नसम्वादे। पुराणस्मृतिवेत्तारः क्रतव्याकरणश्रमाः अनूचानाः श्रोत्रियाश्चब्राह्मणाः पंक्तिपावनाः धर्मोपि मन्वाद्यक्तवचिन्त्रैवश्चयणाद्धर्मपाठकइति ॥

## मू० ब्राह्मोढापुत्रश्चेतिपंक्तिपावनाः ॥१७॥

ब्राह्मविवाहेनोढा ब्राह्मोढातत्पुत्रः पूतः पंक्तिपावनइत्यर्थः चकारोब्रह्मोढापत्यादिसमुच्चयार्थः तथाचशङ्खः। ब्रह्मदेयासुतानोब्रह्मदेयाप्रदायकः। ब्रह्मदेयापतिश्चैवब्राह्मणाः पंक्तिपावनाइति। ब्रह्मदेया ब्रह्मविवाहेनदत्ता तदनुसन्तानस्तत्सन्ततिः।

दक्षिभुङ्गागो हव्यकव्ये पुमन्त्रवित् आत्मानमन्नदातृंश्चगमयत्यासु रौद्रतिमिति। आज्यदोहंविशेहइत्याद्या आज्यदोहाःसुरूपकृत्नुम तयेधिशासोममिन्द्रमन्दहुत्वा । स्वादोरित्याविविपूवतइति अश्वान्त-र्गदितामूत्पन्नानि सामानीत्यनुत्पन्नानि सामानिकस्पभाःस्त्रियः पु-राजितोमान्यसइति। यदग्निरक्षारस्वेयथाजाविति अमीनवतेकन्दु इइति अथान्तर्गदितासूत्पन्नानि सामानियनिपङ्काचत्वारः यतो दिवःपचते रथ्योत्तरसइत्यादि षडगुत्पन्नानि सामानिपदस्तोमाः गोमूक्तानिसर्वसामगमधितानि । अश्वसूक्तंप्रसिद्धं यदिन्द्राहं। यदारम्यमखांगोति भेदेनेन्द्रशुद्धे सामानी । एतोन्विन्द्रंस्तवामेत्य-साधानहयंतररथमन्दोधायतीत्येकम् । कयानश्चित्रघाभुवेत्यादि वामदेव्यम् । एवंसामभिराच्छन्नोरक्षितः । श्राद्धभोजनदोषैर्नलि प्यते मन्त्रविदित्यर्थः ।

## मू० नियोज्याभावेप्येकंवेदविदम्पङ्क्तिमूर्द्धनिनियुञ्ज्यात् ॥ १९ ॥

नियोज्याः पूर्वोक्ताःमृत्युक्ताश्च तेषामभावप्राप्तौ एकम्वेद-विदविदंवेदार्थज्ञमेव मुख्यपंक्त्यादौ नियुंज्यादुपवेशयेत्। तेनैवेतरपं क्त्युपविष्टाअमुख्याः पूताभवन्तीत्यर्थः। अथवावेदविदवेदपारगम् तच्च लक्षणञ्च उत्पत्तिप्रलयौचैव भूतानामगतिङ्गतिम् वेत्तिविद्यामविद्या ञ्चसभवेद्वेदपारगइति अपिशब्दोभावेनुकल्प विशेषसमुच्चयार्थः । तथाचापस्तंबः । ब्राह्मणान्भोजयेद्ब्रह्मविदो योनि गोत्रमन्त्रान्तेवा स्यसंबन्धीनिति योनिसंबन्धाः मातुलश्वशुरादयः । गोत्रसंबन्धाः सपिण्डसगोत्रादयः मन्त्रसंबन्धावेदमन्त्रादि यनुशिष्टाः । अन्तेवा-सिसंबन्धाः शिष्यानुशिष्यादयः एवंविधसंबन्ध रहितानभावेभो-

जयेदित्यर्थः । ननुचाभावोपिशिष्यानित्यत्वापि शब्देनानुकल्पसंगृहीतस्तत्कथं पुनरिहापिशब्देनानुकल्पे विशेषाभिधानमिति । उच्यते अनुकल्पेपिविशिष्टं विध्यर्थमित्यदोषः । तेनमातामहमातुलश्वस्रीयंश्वशुरंगुरुं दौहित्रं विट्पतिंबन्धुं ऋत्विग्याजौचभोजयेदित्यत्र मन्वादिवचनेइति विशेषेणबन्धुमातुलशिष्याणा मनुकल्पउक्तास्तत्रविशेषविधिः पुनरपिशब्देनगृहीतइत्यर्थः । तथाचपराशरः पञ्चभिःपुरुषैर्युक्ता यश्राद्धेयाश्चगोत्रिणाः । षड्भ्यस्तुपरतः पुम्भ्यः श्राद्धे भोज्याःस्वगोत्रिणः । पञ्चभिर्युक्ताः पञ्चपुरुषपर्यन्तं अश्राद्धेया इत्यन्वयः । मातुलेतुस्कन्दसंवादः स्वमांशिमातुलसुतां यस्तामुद्वहतेद्विजः गुरुतल्पगएवासौ सचाऽसात्पङ्क्तिदूषकः सचेतिमातुलः शिष्यस्त्वधनहारीति विशिष्टविधिरिति । श्वसुरस्वस्रीयादीनां गुणत्वविधिर्निर्गुणत्वे योनिसंबन्धत्वेननिषेधइत्यविरोधः । नियोज्याभावेवेदविदेकेनैव सिद्धिरित्यत्रहेतुमाह ॥

## सू० आसहस्रात्पङ्क्तिं पुनातीतिवचनात् ।२०॥

यतः सहस्रविप्रयुतांपङ्क्तिमेको वेदवित्पुनातीतिवचनन्तस्मादेकमपितादृशंपङ्क्ति मूर्धन्युपवेशयेदित्यर्थः वचनञ्चात्रभवति तेषामेकांपङ्क्तिमूर्धनियुक्तो वेदवित्सहस्रैरप्युपक्रान्तां पङ्क्तिंपुनातीति । नित्यंयोगपरोविद्वान्समलोष्टा श्मकाञ्चनः । ध्यानशीलोयतिः शान्तोब्राह्मणः पङ्क्तिपावनइति । वर्ज्यानाहमनुः यस्तेनाःपतिताः क्लीवायेचनास्तिकवृत्तयः । तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् जटिलंवानधीयानन्दुर्बालम् कितवन्तथा । याजयन्तिचये पूगां स्तांश्चश्राद्धेनभोजयेत् । चिकित्सकान्देवलका न्मांसविक्रयिणस्तथा विपणेनचजीवन्तो वर्ज्याःस्युर्हव्यकव्ययोः । प्रेष्योग्रामस्यरा-

श्वश्च कुनखीश्यावदन्तकः । प्रतिरोद्धागुरोश्चैव त्यक्ताग्निर्वार्द्धुषि-
स्तथा यक्ष्मीचपशुपालश्चपरिवेत्तानिराकृतिः ब्रह्मद्विट्परिवि-
त्तिश्चगणाभ्यं तरएवच कुशीलवोवकीर्णीच वृषलीपतिरेवचपौ-
नर्भवश्चकाणश्चयस्य चोपपतिर्गृहे भृतकाध्यापकश्चैवभृतका-
ध्यापितस्तथा । शूद्रशिष्योगुरुश्चैव वाग्दुष्टःकुण्डगोलकौ ... ब्राह्मैर्यौनैश्चसंबन्धैःसंयोगम्पतितैर्गतः आगार-
दाहीगरद'कुण्डाशीसोमविक्रयी । समुद्रयायीवन्दीचतैलिकःकू-
टकारकः पित्राविवदमानश्च(१)कितवोमद्यपस्तथा पापरोग्यभि-
शस्तश्चदाम्भिकोरसविक्रयी धनुःशराणांकर्त्तायश्चयश्चाग्रेदिधिषूप-
तिः मित्रध्रुग्द्यूतवृत्तिश्चपुत्राचार्यस्तथैवच भ्रामरीगण्डमालीच-
श्वित्र्यथोपिशुनस्तथा । उन्मत्तोऽन्धश्चवर्ज्याःस्युःवेदनिन्दकएवच ह-
स्तिगोश्वोष्ट्रदमकोनक्षत्रैर्यश्चजीवति पक्षिणांपोषकोयश्चयुद्धाचा-
र्यस्तथैवच स्रोतसांभेदकश्चैवतेषांचावरणेरतः गृहसंवेशकोदूतो
वृक्षारोपकएवच । श्वक्रीडीश्येनजीवीचकन्यादूषकएवच हिंस्रो-
वृषलवृत्तिश्चगणानांचैवयाजकः आचारहीनःक्लीवश्चनित्ययाच-
नकस्तथा कृषीजीवीशिल्पजीवीचसद्भिर्निन्दितएवच औरभ्रिकोमा-
हिषिकः परपूर्वापतिस्तथा प्रेतनिर्यातकश्चैववर्जनीयाःप्रयत्नतः ।
एतान्विगर्हिताचारानपाङ्क्तेयान्नराधमान् । द्विजातिप्रवरोविद्वा-
नुभयत्रविवर्जयेदिति एषामर्थाः स्तेनोब्राह्मणान्यद्रव्यहारी तस्य
पतितत्वेनोपादानात् नास्तिकानास्तिकधर्मफलमित्यभिमानि-
नस्तेषांवृत्तिर्येषाते जटिलोब्रह्मचारीअनधीयानस्तद्विशेषणस्य
अधीयानस्याश्राद्धेयत्वात् दुर्बालःखल्वाटकःकपिलकेशोवा दुश्च-
र्मेतिकश्चित् कितवोद्यूतासक्ताः पूगयाजकागणयाजकाः चिकि-
त्सकाभिषजः देवलकाधनार्थंदेवार्चकाः देवार्चनपराविप्रोवित्ता-
र्थीवत्सरत्रयम् असौदेवलकोनामहव्यकव्येषु गर्हितइतिवचनात्

(१) कैकरइतिपाठान्तरम् ॥

मांसविक्रयिणश्चापण्यमपि विपणिमवजीवन्तस्त्वनेनैव निषेधसिद्धौ-
प्रेष्योधनार्थमादेशकारी प्रतिरोधाविरोधी त्यक्ताग्निर्विहितत्याग
श्चिनैवोपयाग्नित्यागी वार्धुषि.द्रव्यवृद्ध्युपजीवीयथासमर्घधान्य-
मुद्धृत्यमहर्घ्यंय:प्रयच्छति सवैवार्द्धुषिकोनामेति यक्ष्मीक्षयी पशु-
पालोनापदिष्टत्यर्थः । परिवेत्ताऽकृतविवाहाधानेज्येष्ठभ्रातरि-
कृतदाराग्निसंग्रहः निराकृतिरधीतनष्टवेदः अधीत्यविस्मृतवेदे-
भवेद्विप्रोनिराकृतिरिति देवलोक्तेःयस्त्वाधायाग्निमालस्याद्देवा-
दीन्नेभिरिष्टवान् निराकर्त्तामरादीनांसविज्ञेयोनिराकृतिरितिम
ब्रह्मद्विट्ब्राह्मणद्वेषी नानाजातीयाअनियमकृतयोगणास्तन्मध्य-
वर्त्तीगणाभ्यन्तरः ग्रामीणइतिकश्चित् कुशीलवोनटवृत्तिः अव-
कीर्णीस्खलितब्रह्मचर्यः वृषल्यनेकविधातत्पतिः । तथाच वंध्याद्यु-
वृषलीक्ते याच्छपली चमृतप्रजा चाण्डालीचरिताया चकुमारीयार-
जस्वलेति । स्कान्दसंवादोक्तेः. रङ्गाहभार्यायाः. उपपतिर्जारः ।
वाग्दुष्टोनिष्ठुरः । पुनर्भूरनेकविधातत्पुत्रःपौनर्भवः भृतकोभृत्या-
परिक्रीतोध्यापकः तेनैवाध्यापितस्तच्छिष्यःगुरुर्यस्येतिशूद्रस्त्वनुप-
क्तः अकारणमपातितस्तनपित्रोर्गुरोस्त्यागी ब्राह्मैरध्ययना-
ध्यापनैर्योनैर्वाष्टिकैःसंबन्धैःपतितैःसावित्रपतितैर्व्रात्यैश्चयःसर्व-
गंगतःसविवर्जितः गरदोविषदोऽग्निदाऽन्येषांतस्यदानेमहापात
कित्वेनसंग्रहात् कुण्डाशीइष्टिपत्नाभितावत्परिमितान्नभोजी जार-
जातान्नभक्षीत्यन्ये । समुद्रयायीनौकया समुद्रोल्लावमानः । केकरो-
ध्याङ्घ्रदृष्टिरितियावत् । मद्यपोद्राक्षादिमद्यपः । पापरोगीकुष्ठा-
दिनिन्द्यरोगी । अभिशस्तोवाच्यभुक्तः । दाम्भिकः पाखण्डकूटध-
र्मचारी रसविक्रयीगुडलवणादिविक्रेता अग्रेदिधिषुपतिर्ज्येष्ठा-
यामनूढायांकनिष्ठोढातत्पतिरिति दूतवृत्तिजीवकः । पुत्राचार्यो-

थरपाठकः । पुत्रानुशिष्टइतिकश्चित् । भ्रामरीभ्रमरवदर्थार्जकः । अपस्मारीतिकश्चित् । गृहसंवेशकोवास्तुकिधर्मेवर्त्तमानः मूल्योगृहकारीत्यन्यः हस्तिगोश्वोष्ट्रदमकोदमनेनजीवनः नक्षत्रैर्ज्योतिषशास्त्राजीवकः युद्धाचार्योयुद्धोपदेष्टातदुपायी स्रोतसांभेदकःस्रोतसांनिरोधातेषामावरणेरतः सेतुकृत् दूतोदूत्यवृत्तिः वृक्षारोपकः-इत्यर्थः श्वःक्रीडीश्वभिः क्रीडावान् कन्यादूषकोमूल्यादिनायोनिविदारकः वृषलपुत्रोऽस्यपत्यवपुत्रोऽस्यनान्यः क्लीबोधर्मोद्यमशून्यः पण्ढस्योक्तत्वात् सद्भिर्निन्दितोऽकारणेपिअयशाक्षयिजीवीविशेषण वीर्णधृताशुणैर्युक्ताभवेयुर्येपिक्वर्यकाः सार्विकोत्रा:क्रियावन्तस्ते-राजकेनराधमाङ्गति धार्मिककार्यकाम्यनुष्ठानात् चौरभिकामेयपोषकः माहिषिकोमहिषीपालः व्यभिचारिणीपुत्रः महिषीत्युच्यतेभार्यासाचैवव्यभिचारिणी तस्यांयोजायतेगर्भःसवैमाहिषकःस्मृतइतिवचनात् परपूर्वामागन्यस्मैदत्तातस्याःपतिःपरिणेताद्वितीयविवाहेनसंस्कृत्येत्यपौनर्भवःपुनर्वा प्रेतनिर्यातकोमूल्येनप्रेतहारकः यथाक्तेयामित्येषांपंक्तावपिनभोक्तव्यमित्यर्थः उभयत्रेतिदैवेपित्र्ये यमोपि काणाःकुब्जाश्चषण्ढाश्चकृतघ्नागुरुतल्पगाः बृह्मघ्नाःसुरापाश्चस्तेनगोघाश्चिकित्सकाः राष्ट्रकामान्तथोन्मत्ताः पशुविक्रयिणश्चये मानकूटास्तुलाकूटाःशिल्पिनोग्रामयाजकाः राजभृत्यश्चबधिरामूकस्तत्राटपुंगवाः वाणिज्योमधुहर्त्तारोगरदावनदाहकाः समयानांचभेत्तारः मद्यानांचनिवारकाः प्रष्टयोपनिष्टस्नायइयाप्रव्रजिताश्चये यश्चप्रव्रजितान्यारतःप्रव्रज्यावसितश्चयःसमुद्रयायीयांसाणीकेशविक्रयिणश्चये श्यावकौनीचवीरघ्नोगुरुघ्नःपितृदूषकः अस्यार्थः गुरुतल्पगः गुरुरानगुरुः धृत्तमाधमजनस्त्रियःसुतास्वगमनशीलः करुणा कतस्पगउच्यते इत्येवमाद्याः राष्ट्रकामान्नृप-

धर्माभिलापकः मानकूटाधान्यादिमानपात्रवञ्चकाः मधुहर्त्तारो-
माक्षिकचौराः प्रव्रज्योपनिवृत्ताः संन्यासिनःइत्याप्रव्रजितः पुना-
गत्युत्पादेश्चवसन्न्यासीप्रव्रज्यावसितोनवविधप्रत्यवसितोपलक्षकः वां
ताशीभुक्तंवमितखाजाल्लसयापुनर्भोजी केशविक्रयीचामरादिवि-
क्रेता वीरघ्नस्त्यक्ताग्निः पुत्रहाशाऽपाठयता । शासनाप्रदानास्म-
तपुत्रस्यस्मृतिप्रदोपात् स्कन्दसंवादे । वर्णयेत्कुण्डगोलौतुना
स्तिकंरंगजीवनम् । जपहोमविरक्तांश्चशाकुनंराजसेवकम् चिकि-
त्सकञ्चगणाकाङ्क्षितवंहैतुवादिनम् इत्यामिषपरित्यागिस्त्वपाकभु-
जौद्विजौ ब्राह्मणायेविकर्मस्थावैडालवृत्तिकाःशठाः रोगहीनाति-
रक्ताङ्गाःक्रूरोधूर्त्तपुरोहितौ अनध्यायेष्वधीयानाः सूचकश्चनियाम-
कः स्त्रीजितश्चकदर्यश्चसुदूष्यश्चाहितुण्डिकः ग्रामयाजीश्चदया-
जीवेदसोमोपजीवकइत्यादि । अस्यार्थः कुंडगोलौप्रसिद्धौ रंगजी-
वीवस्त्रादिरञ्जकः शाकुनःपक्ष्युपजीवी हैतुवादीतर्कबलेनसर्वत्रसं-
शयकृत् इत्येतिश्राद्धादीनांसत्यागी एवंपाकरुचिः विकर्मस्थोनि-
षिद्धकर्मा वैडालव्रतिकःपारिभाषिकः तथाचयस्यधर्मध्वजोनि-
त्यंसुरध्वजइवोच्छ्रितःप्रछन्नानिचपापानिवैडालंनामतद्व्रतं तदस्या-
स्तीतिवैडालव्रतीयोलोकदम्भकइत्यर्थः। तथाच । धर्मध्वजीसदा-
लुब्धःछाद्मिकोलोकदंभिकः । वैडालव्रतिकोज्ञेयोहिंस्रः सर्वाभिसं-
धकइति शठोवञ्चकः । अनध्यायेष्वपूर्वपाठी सूचकोराजकर्णे-
जपः नियामकोऽविवादद्रष्टा कदर्यः पारिभाषिकः यथा आत्मान-
ञ्चधर्मकृत्यञ्च पुत्रदारांश्चपीडयेत् । लोभाद्यःपितरोभृत्या न्सकदर्य-
इतिस्मृतइति । सदूष्य.कुत्सिताचारः अहितुण्डिकःसर्पदन्तोत्पाटी
इतियाज्ञवल्क्योऽपि । सदासेवीचवल्वाटः कुप्रतिग्रहकारकः अज्ञात
कुलगोत्रोयोद्विजंनयः शिल्पिकर्मकृत् । अव्रतानामुपाध्यायः काण्ड-

पृष्टाश्रयेद्विजाः। अयतिर्मोक्षवादीच चतुर्थाश्रमवर्जितः कुणपायुधजीवीच पुत्रप्रतिनिधिश्चयः। धर्माचारविहीनाये श्राद्धेप्येतान्विवर्जयेत्। अस्यार्थः अव्रतानामुपाध्याय इत्यवरादिशिचकः काण्डपृष्ठा मातुलस्यसुतोद्वाही विप्रोयश्चाङ्गजीवकः। काण्डपृष्ठस्तुविज्ञेयः श्राद्धेयश्चातिनामिषमित्युक्तः। तथा हिजश्चावनिकायेच पुत्रप्रतिनिधिस्तथा सर्वेतेब्राह्मणामोक्ताः काण्डपृष्ठानराधमाः। हारीतोपि शूद्रापुत्रश्चदत्तश्चये तथाक्रीतकासुतः। सर्वेतेमनुनाप्रोक्ताः काण्डपृष्ठाद्विजाधमा इति अयतिर्गृहस्थोमोक्षवादी मुक्तिशब्देरतः तथाचब्रह्माण्डे। श्राद्धाईगुणयोगेपिनैतेजातुकथञ्चन निमन्त्रणीयाश्राद्धेषु सम्यक्फलमभीप्सतेति। श्राद्धार्हागुणावेदाध्ययनादयः। अपरंस्मृतिभ्योविज्ञेयमित्यलं प्रपञ्चेन।

८ नियोज्यानियन्त्रणीयाश्चैव। गिरयांसूत्रस्थी
अथयज्ञनिमकरण समाप्तम्॥
अष्टमी कण्डिका च समाप्ता।

---

इत्थंश्राद्धोपयोगि सर्वमभिधायेदानीं गृहस्थस्यकाम्य कर्मोचित्याच्छ्राद्धेषु काम्यकालानुपचिक्रांसुः सूत्रमारभते॥

## मू० अथकाम्यानिभवन्ति॥ १॥

श्राद्धानीतिशेषः तत्राथशब्दःकार्त्स्न्यार्थः। नकेवलन्तिथयएव काम्यकालाःकिन्त्वन्येपि स्मृत्युक्ताज्ञेयाइत्यर्थः। तथाच संक्रान्तिविषुवच्चैव विशेषेणायनद्वयं। व्यतीपातोजन्मऋक्षंचन्द्र सूर्यग्रहौतथा तिथिनक्षत्रवाराश्च उद्दिश्याभ्युदयन्तथा। एतांस्तुश्राद्धकालान्वैकाम्यानाह प्रजापतिरिति। संक्रान्तिविषुवायनादित्यनयोः पुण्यातिशयेन विशेषोपादानात्। व्यतीपातस्त्रिविधः महाल्पनित्यभेदेन

तथाच सिंहस्थौशुक्रभौमौच मेषस्थौचरविसितः । द्वादशीहस्तसंयुक्ताव्यतीपातो मघासुसः स्मृतस्तु । श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके यद्यमारविवारेणव्यतीपातः सउच्यते । ध्रुवयुक्तः नित्योनित्ययोगः अभ्युदय.शरीरोपचयादिः । अन्येपिस्मृत्यन्तरोक्तायोगाज्ञातव्याः एतेषुश्राद्धविधानं स्मृत्यन्तरेभ्यउपलब्धव्यम ग्रन्थगौरवभयान्नेहलिखितम । ननुचायशब्दोनस्मृत्युक्त कालस्यासंगृहीतत्वाद भाद्रपदीमारभ्यक्रियमिति श्राद्धसूत्रकृताउद्दिश्य एवेत्यविरोधः । तस्मात्पौर्णमास्यानेवोपक्रमः .श्राद्धषोडशकस्येतिप्रागुक्तम । तथाच वायुपुराणं पुष्टिप्रजास्मृतिंमेधां पुत्रानैश्वर्यमेवच । कुर्वाणःपौर्णमास्यान्तुसम्पूर्णं फलमश्नुते । प्रतिपद्धनलाभायेत्युपक्रम्य अमायास्तुप्रयत्नेन श्राद्धंकुर्याच्छुचिःसदा । सर्वान्कामानवाप्नोति स्वर्गस्थानंसमश्नुतइति श्राद्धषोडशकम्प्रतीतं । प्रपञ्चितञ्चास्माभिरादिसूत्रव्याख्यानेकल्पेनेति । फलानितिथिष्वाह ॥

## सू० स्त्रियोऽप्रतिरूपाःप्रतिपदि ॥ २ ॥

श्राद्धकृल्लभतइतिशेषः । अप्रतिरूपाः अद्वितीयरूपाः स्त्रियोभार्याः एतच्चकामनान्तरोपलक्षणम । तथाचमनुः कुर्वन्प्रतिपदि श्राद्धं सुरूपांलभतेसुतामिति । वायुपुराणेपि प्रतिपद्धन लाभायलब्धस्वास्यननश्यतीति । कन्यामिति याज्ञवल्क्यइत्यादि अत्रेतच्चिन्त्यते । मृतपितृकोजीवन्मातामहः किंषट्पिण्डकंश्राद्धकुर्यादुतत्रिपिण्डकमिति । अत्रकेचाहुः द्विपार्वणस्यविहितत्वात् जीवन्मातामहमतिक्रम्यापिकुर्वीतेति । तथाचमनुः ध्रियमाणेतुपितरि पूर्वेषामेवनिर्वपेत् । विप्रवद्वापितंश्राद्धे स्वकं पितरमाशयेत् पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः पितुः सनामसङ्कीर्त्य कीर्तये

मपितामहं । पितामहोवातच्छ्राद्धम् भुञ्जीतेत्यब्रवीन्मनुरिति
तदविचारितरमणीयं । अस्य नार्द्धश्लोकद्वयस्य साग्नेरन्वाहार्या-
दिनियतश्राद्धविषयत्वात् । तथाचनिगमः योवाजीवत्पितृभ्या-
स्तांपिण्डस्थानद्रव्ये के जीवतांवादेयमिति हिरण्यकेतुः । कथा-
दाश्वविधित्वाद्दशाङ्गत्वादिति । नन्वेवञ्जीवत्पितृकस्य होमा-
न्तमनारंभोवेति कात्यायनेनान्वाहार्यादिनिषेधात्कथमेवमिति
सत्यम् कात्यायनेनोक्तेर्वाजसनेयि मात्रनिषेधविषयत्वा दित-
रसाम्नीनांमनुवचने जीवदतिक्रम्यविहितत्वात् । किञ्चार्थान्त-
रंसूत्रस्यवाजसनेयि मात्रस्यपितास्मांश्चेज्जीवति तदाहोमान्तमना-
रंभोवाविकल्पितः । यदिचसंन्यासीपतितोवा जीवति तदावाज
सनेयिनोपिजीवदतिक्रमः सूत्रकृतोभिमतइति । तथाचकात्या-
यनः ब्राह्मणादिहतेताते पतितेसङ्गवर्जिते । व्युत्क्रमाच्चमृतेदेयं
येभ्यएवददात्यसाविति । किञ्च नजीवत्पितृकःकुर्याच्छ्राद्ध मग्नि-
मृतेद्विज. येभ्यएवपितादद्यात्तेभ्यो दद्याच्चसाग्निकइत्यनेनसाग्नि
जीवत्पितृकस्यैवातिक्रमोविहितो ननिरग्नेरिति । अपिच दर्शश्राद्धं
गयाश्राद्धंश्राद्धंचापरपक्षिकं नजीवत्पितृकःकुर्यात्तिलैः कृष्णैश्चत-
र्पणमित्यादौपितृग्रहणम् जीवन्मातामहादुपलक्षणमतेनापिजीव-
न्मातामहस्यनिषेधः अन्यच्च । उद्वाहेपुत्रजननेइत्यत्रापिपड्ग्रहणे-
नापरपाक्षिकन्नविहितम् । यत्तु जीवत्पितरिवैपुत्रः श्राद्धकालंवि-
वर्जयेत् तेषांवापिपितादद्यात्तेषामेके प्रचक्षतेइतिहारीतोक्तिः यच्च
पितुः पितृभ्योवादद्यात्सपितेत्यपरा श्रुतिरिति। कात्यायनादिभिरु
क्तम् तत्सपिण्डीकरणविषयमाभ्युदयिकविषयंवा तथाच वृद्धौतीर्थेच
सन्यस्तेताते चपतितेसति । येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसु-
तःयत्पुनः पितरोयत्रपूज्यंतेतत्रमातामहध्रुवम् अविशेषेणकर्तव्यं-

विशेषान्तरकंव्रजेत् यत्र पिण्डास्तुः पञ्चितिस्थितिरित्यादिवचनम् इदमातामहश्राद्धविधायकं तन्मातृवर्गद्वयविषय मित्यविरोधः । तस्माज्जीन्मातामहकर्तु. पितृवर्गद्वैशेषेण विपिण्डकंश्राद्धमित्युचितं तथाचस्मृतिः। पितृवर्गेमातृवर्गे तथामातामहस्यच जीवेन्नयदिवर्गोदौतद्वर्गं च परित्यज्येत्। चशब्दोमातामहौसंग्रहार्थः प्रजापतिरपि संक्रान्ता बुपरागेचपर्वोत्सवमहालये। निर्वपेद्वपिण्डांस्त्रीनितिप्राह प्रजापतिरिति। अतएवमात्रैकवर्गे श्राद्धस्यत्रयोदश्यांनिषेधः। श्राद्धन्नैकस्यवर्गस्य त्रयोदश्यासुपक्रमेदिति एवमन्यपक्षावपि। अतएवजीवेत्स यदिवर्गोद्यावित्यनेन वर्गादावेवजीवतोनातिक्रमो नजीवत्पितामहा देरपीत्यर्थोदुक्तम्। तेनमृतपितृकोजीवत्पितामहादिकमति क्रम्यापिदद्यादित्यर्थ.। तस्मान्निरग्निजीवत्पितृकस्य सपिण्डनाभ्युदयिक श्राद्धयोरेवसाग्नेस्तु सर्वश्राद्धे पुजीवदतिक्रमेण श्राद्धं नेतरत्रेतिचतुरस्रम्॥

## मू० द्वितीयायांस्त्रीजन्म॥ २॥

श्राद्धकर्तुःस्यादितिशेषः स्त्रीजन्मेतिकन्याजन्मेत्यर्थः। तथाच मनुः कन्यकास्तुद्वितीयायामिति उपलक्षणञ्चैतत् । तथाचवायुपुराणम् द्वितीयायान्तुयःकुर्यां द्विपदाधिपतिर्भवेत्। मार्कण्डेयोपि द्वितीयाद्विप्रजाप्रदेति। कन्यावेदिनइति याज्ञवल्क्यइत्यादि कन्यावेदीजामाता। अत्रैतच्चिन्त्यते किमवंपितामहादि तिथौपौत्रेण श्राद्धकार्यमुतनेति। तत्रकेचिधिकाराभावान्नेत्याहुः तदयुक्तम् विहितत्वात्। तथाचस्वपमात्स्यं नान्दीमुखानामप्यर्वं कन्याराशिङ्गतेरवौ पौर्णमास्यास्वकर्तव्यम् वाराहवचनंयथेति। नान्दीमुखाःपितामहादयः चकारादन्यतिथावपि। तथाचटड्याज्ञवल्क्यः

कुरुपूर्णेन्दुपञ्चम्यां यः श्राद्धं कुरुते नरः। कामिकन्तु वरं पुत्रं लभते नात्र संशयः। तथा च कांचनतिपुत्र पौत्रेभ्यः पायसं मधुसंयुतम् तस्मात् सौंसवविधिना तत्र ये त्वायसीनन्विति। पूर्णेन्दुप्रौष्ठपदी अयन्तु विशेषः पितृपूर्वमिति॥

## मू॰ अश्वास्तृतीयायाम्॥ ४॥

श्राद्धकर्त्तुरितिशेषः। उपलक्षणञ्चैतत् तथा च मनुः। तृतीयायां बन्धिनइति वायुपुराणेपि नराःथिनांतृतीया चश्च चैपापनाशिनीति। अत्र तदुच्यते भरण्यादावत्र किमपिण्डकस्यादुत नेति। तत्र निषेधादपिण्डकमिरयेके तत्र तिथिनिमित्तकत्वात् तथा च षड्दयोगादियुतेपितत्किनैपिण्डपातनम्। तथा तिथिनक्षत्रयोगेषु प्राधान्यन्तु तिथेःस्मृतं। तिथिमूलानि सर्वाणि यथाष्टम्येगुणादिकमिति। यत्तु भरण्यादौतन्निषेधः सनक्षत्रादिनिमित्तकविषयः प्रपञ्चितन्तदादिसूत्रे॥

## मू॰ चतुर्थ्यांक्षुद्रपशवः॥ ५॥

कर्तुस्युरितिशेषः। क्षुद्राश्चजादयः। उपलक्षणञ्चैतत्। तथा च वायुः। श्राद्धं चतुर्थ्यांकुर्वाणः शयिरिक्षुद्राणि पश्यतीत्यादि अत्र तच्चिन्त्यते किमत्र मातृतिथौ मातृश्राद्धं पृथक्स्यादुत नेति। तत्रैकेआहुः। अन्वष्टकासु वृद्धौ च गयायाञ्च क्षयेऽहनि। मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिनासहेति महालये गयाश्राद्धे वृद्धावन्वष्टकासु च नवदैवतमत्रस्याच्छेषं षाट्पौरुषं विदुः चतुर्विंशतिमतेपि। सर्वेभ्यश्च पितृभ्यश्च तत्तल्लोभात्तथैव च पिण्डां देभाःपृथग्दद्यात्सशाभान्नपदे द्विजइति स्मृतिसमुच्चयेपि पृथक्श्राद्धं तु मातॄणां प्रकर्त्तव्यं विसर्जनः। नवम्यां पितृपक्षे तु वृद्धौ तीर्थे महालये स्मृतार्थसारेपि तन्मा-

तृप्त्यद्धम्पृथक्प्रशस्तमिति देवानुरपि मातुर्गयाष्टकावृद्धौ मृताहे च महालये स्वधाहं पृथग्देयं तन्त्रं चानुगतापदीति अयं विशेषः मृते पितरि तमूर्ध्वं कर्जीवति तु मृतवर्गस्यैवेति    पृथक्श्राद्धं जीवत्पितृकस्यमे तेरक्तेन वर्मविषयमितरन्ये ।

## सू० पुत्राः पञ्चम्याम् ॥ ६ ॥

कर्त्तुः स्युरिति शेषः पुत्रशब्दः पुन्नामनरकत्राः पुत्रहेतुः पृणातीति पितृत्वात् । तथा च मनुः । पञ्चम्यां शोभनान्पुत्रानिति उपलक्षणं चैतत् तथा च वायुः पञ्चम्यां चैव कुर्वाणः प्राप्नोति महतीं श्रियं मार्कण्डेयेऽपि श्रियमाप्नोति पञ्चम्यामिति अत्रैव मातुः क्षयाहे पार्वणं स्यादिति गाङ्गः तथा च हरयाज्ञवल्क्यः पितृपक्षेऽस्मिन्मायां वा पितृमातृक्षयेऽ यदि पितुश्च पार्वणं कुर्यादेकोद्दिष्टं तु मातृकं तथा पितुस्तु पार्वणं कुर्यादेकोद्दिष्टं तु मातृकम् तथा पितुस्तु पार्वणं कुर्यात्स्मे न पक्षे मृतस्य तु पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव हि प्रेतपक्षेति यियंस्त्र पितुरेकस्य पार्वणम् मातृभ्रातृपितृव्याणामेकोद्दिष्टं सदैव हीत्यादि वचने भाः तदयुक्तम् एकोद्दिष्टस्य चापत्नविषयत्वेनाविरोधात् तथा च पुराणसमुच्चये अमायां च क्षयो यस्य प्रेतपक्षे तथा भवेत् निरग्निरपि कुर्वीत मातापित्रोस्तु पार्वणम् अनग्निः पार्वणं योन मातापित्रोः क्षयेऽहनि करोति बुद्धिमोहेन स भवेत्पितृघातकः जमदग्निरपि आपः-व्यसपिण्डत्वमोक्षौ विधिवत्सुतः कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि गौतमोऽपि आपाद्याः पंचमेपक्षे प्रेताश्रे तु तयोर्यदि पार्वणं तच्च कुर्वीत वर्जयित्वान्यदैहयोम् हेमाद्रावपि सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव हीत्यसंबद्धता ॥

## मू० षष्ठ्यांद्यूतर्द्धिः ॥ ७ ॥

कर्त्तुःस्यादितिशेषः ऋद्धिर्द्यूतविजयः उपलक्षणञ्चैतत्। तथाचवायुः षष्ठ्यांश्राद्धन्तुकुर्वाणोद्विजास्संपूजयन्तिहि मार्कण्डेयोपि षष्ठ्यांपूज्योभवेन्नरइति अयंविशेषःपुराणसमुच्चयेपि एकमातृद्विपितृकौभ्रातरावन्यगोत्रजौ मातुःश्राद्धन्तुकुर्यातांषष्ठ्यांपुत्रावुभावपि स्मृतिसमुच्चयेपि देयंश्राद्धन्तुषष्ठ्यांतैर्येद्व्यामुष्यायणाःसुताः ये क्षेत्रिणश्चपितुश्चादौदद्युःपश्चात्तुबीजिनः अनेकमातृकस्यविशेषोगालवेनोक्तः अनेकामातरोयस्यश्राद्धेचापरपक्षिके। अर्घ्यदानंपृथक्कुर्यात्पिण्डमेकंतुनिर्वपेदिति।

## मू० कृषिःसप्तम्याम् ॥ ८ ॥

कर्त्तुःस्यादितिशेषः उपलक्षणञ्चैतत् तथाचवायुः कुर्वतेयस्तुसप्तम्यांश्राद्धानिसततंनरः महासत्रमवाप्नोतिगणानांचाधिपोभवेत् मार्कण्डेयोपि गणाधिपत्यंसप्तम्यामिति अत्रैतद्विचिन्त्यते रजस्वलायांपत्न्यामत्रश्राद्धंकार्यंनवा। तत्रैकआहुः नेति तथाच। श्राद्धीयाहनिसंप्राप्तेयस्यभार्यारजस्वला। श्राद्धन्तत्रनकर्त्तव्यं कर्त्तव्यम्पञ्चमेऽहनीति तन्न मृताहेऽपुत्रपत्न्याःस्वयङ्कर्त्तृकनिषेधत्वात् तथाचगौतमः नपुत्रस्ययदाभार्यासंप्राप्तेभर्त्तुराब्दिके। रजस्वलाभवेत्सातुकुर्यात्तत्पञ्चमेऽहनीति।

## मू० वाणिज्यमष्टम्याम् ॥ ९ ॥

कर्त्तुःस्यादितिशेषः वाणिजशब्देनयथावणिजोऽनेकलाभस्तथाष्टमीश्राद्धेनानेकफलमित्यर्थः तथाचवायुः संपूर्णांवृद्धिमाप्नोतियोऽष्टम्यांकुरुतेनरः मार्कण्डेयोपि अष्टम्यांवृद्धिमुत्तमामिति उपलक्षणंचैतत् तेनशाफलमपीत्यर्थः। तथाचब्रह्माण्डे आपाद्गताः

पंचमेपचे गयामध्याष्टमीस्मृता चयोदशीगजच्छायागयातुस्यन्मृपि-
तृकमिति अत्र तदुच्यते जिनपरपाचिकंश्राद्धं सूतकान्तेस्यादुतनेति
तत्रैकश्राह्रः मासिकेऽब्दे तुसम्प्राप्तेअन्तरामृतसूतके वदन्तिशुद्धी-
तत्कार्यंदर्शेरापिविचचणाइत्यादि वचनान्मासिकाब्दिकयोरेवाशौ-
चान्तेविहितत्वात्परपाचिकत्वेन तदयुक्तम् अस्यापिविहित-
त्वात् तथाचपुराणसमुच्चये महालयश्राद्धे समारब्धेसूतकन्निपतेयदि
समाप्तताहिपितरःसूतकांतेविसर्जयेत् यदिनैवंनरःकुर्यात्मृतका-
तेसमापनम् प्रागदत्तानिमनुष्येणश्राद्धान्यसुरतृप्तये इति महा-
श्राद्धं इत्यापरपचकोपलचणम् अष्टमश्राद्धं गोपि शुचीभूतेनदातव्यं-
यातिथिःप्रतिपद्यते सातिथिस्तस्यकर्तव्यानत्त्वन्यावैकदाचनेति ।

## मू० एकशफन्नवम्याम् ॥ १० ॥

कर्तुःस्यादितिशेषः एकशफाअश्ववेसरादयस्तेषांदन्दमेकश-
फम् सम्हत्युपलचणं चैतत् तथाचवायुः श्राद्धं नवम्यांकृत्वैतेमदं-
यैस्त्रीपुकांचतेति स्त्रियोनवम्याम्प्राप्नोतीति मार्कण्डेयः अत्रैत-
त्सं दिह्यते जीवत्पितृकःकिम्मातुः श्राद्धन्नवम्यांकुर्यादुतनेति तत्रै-
केश्राहुः अमाश्राद्धकृथायाद श्राद्धंचापरपचिकम् नजीवत्पितृकः
कुर्यात्मिदृशादुरप्रजायतइत्यादिवचनाग्निरग्निर्नेति अन्येत्वाहुः ।
अन्यष्टकास्वविहितत्वात्कुर्वीतेति तदेतद्विचारणीयम् नजीवत्पि-
तृकशब्देनकिम्मुख्यजीवत्पितृकमातृविव चयापरपाचिकश्राद्धस्य-
निषेधः आहोस्विज्जीवत्पितृकशब्देनजीवन्मातामहादुरपलचकेन
जीवद्वर्गश्राद्धनिषेधः तत्रयदिजीवत्पितरिमुख्याधिकारिणोदाना-
भावाच्छ्राद्धमात्रस्यैवनिषेधइत्युच्यते तदाजीवत्स्यदिवर्गादौतद-
र्गंतुपरित्यज्येदित्यमृतवर्गश्राद्धविधायकस्यवैयर्थ्यंस्यादन्यत्रयथा-

हेपिमातृश्राद्धस्याकरणाप्रसङ्गश्च स्यात् अथत्वयाहत्वे नतत्कर्त्तव्य-
मर्हिमृतवर्गैविधायकवचनस्यवैय्यर्थ्यंतद्वस्थमेव यदिजीवत्पितृक-
शब्देनजीवद्वर्गश्राद्धनिषेधः इत्युच्यते तर्हिमृतमातृकेसदाचारमा-
त्ताकरणस्यपरित्यागस्यादितितस्मात्कथमत्रसमाधिः उच्यते य-
द्यपि धर्मंजिज्ञासमानानांप्रमाणम्परमंश्रुतिः द्वितीयंधर्मशास्त्रं-
तुतृतीयंलोकसंग्रहइतिपराशरेणलोकसंग्रहस्यप्रमाणमुक्तम् तथा-
पिस्मृतिसदाचारयोर्बाधेश्रुतिविरोधं विनास्मृतिबाधस्यान्याय्यत्वं-
स्मृतिनिरुद्धाचारस्यबाधोन्याय्यइत्युक्तम् । तथाचचतुर्विंशतिमतम्
स्मृतिर्वेदविरोधेनपरित्याज्यायथाभवेत् तथैवलौकिकंवाक्यंस्मृति-
बाधात्परित्यजेत् । वशिष्ठोपि श्रुतिस्मृतिविहितोधर्मस्तदविरोधि-
शिष्टाचारःप्रमाणमिति तस्मात्सर्वोपिजीवत्पितृकोमृतमातृवर्गं न-
वमीश्राद्धेस्वीकुर्यादित्यर्थः तथावचनमपि अन्वष्टक्यांगयाप्राप्तौ-
सत्यायच्चमृतेहनि मातुःश्राद्धंसुतः कुर्यात्पितर्यपिचजीवति गया-
प्राप्तःप्रासङ्गिकोनतद्देशतः । ननुचैवमन्वाद्यादौसर्वत्रजीवत्पि-
तृकःकुर्यादितिनवक्तव्यम् अन्वष्टकादिकालत्रयस्यैवविशेषविधे-
रितरत्रनिषेधसिद्धेः यत्वन्वष्टकासुनवभिःपिण्डैःश्राद्धमुदाहृतमि-
तिनवदैवतमुक्तम् तत्सामान्यन्वष्टकात्रयविषयम् जीवन्मातामही-
विषयंवा नवत्र्यात्रिपिण्डकादिनिवारकंवा अतएवावलिदेवत्यादि
कंयथाधिकारङ्कर्त्तव्यमितिसिद्धं । अन्यथाजीवत्पितृकोऽन्वष्टक्या-
द्यादिकं कुर्यान्मृतमातृकोनवम्यांनेत्यनुचितापत्तेः एवमेकादश्या-
द्यादावपिनियतश्राद्धेप्येवगन्तव्यमितिसर्वंसमञ्जसं द्वादशदैवत्यं-
वात्रप्रपञ्चितमस्माभिरादिसूत्रइतिनात्रपुनरुक्तम् । निमित्तवत्त्वे-
त्वत्रमतिनिमित्तंश्राद्धानिकुर्यात् । तथाचकात्यायनः । वेवहूनि-
निमित्तानिजायेरन्नेकवासरे । नैमित्तिकानिकार्याणिनिमित्ता-

ग्यत्यनुक्रमात्। यत्तु नैकःश्राद्धद्वयंकुर्यात्समानेऽहनिकुत्रचिदितिप्र-
चेतसोक्तोनिषेधः सएकनिमित्ते नैवपुनःकरणविषयः। तथाचजा-
वालः। श्राद्धंकृत्वातुतत्रैवपुनःश्राद्धंनतद्दिने नैमित्तिकन्तुकर्त्त-
व्यन्निमित्तानिक्रमेणात्विति।

## सू० दशम्यांगावः॥ ११ ॥

गावइतिद्विरुक्ताद्युपलक्षणम्। तथाचमनुः दशम्यांद्विखुरंद-
दुः। वायरपि। कुर्वन्दशम्यांतुनरोद्धीभ्रियमवाप्नुयादिति गव-
गवांसर्वसम्पत्तिमूलत्वात्तदभिधानेन दशम्यांप्राशस्त्यंसूचितम्।
तथाचपुराणसमुच्चयेप्रशस्ताः पूर्णिमासुस्थास्तिथयःषोडशैवताः।
तासांश्रेष्ठतमाप्रोक्तादशमी श्राद्धदायिनामिति दशम्यांपूर्णकाम-
तामिति मार्कण्डेयः गवांसम्पत्तिमूलत्वाच्छ्रुतिराह। गौर्वाइदꣳ
सर्वविभर्त्तीति दुग्धाज्यादिनादेवादितृप्तेरित्यर्थः तदुक्तं ह्यग्नौ-
प्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्न-
न्ततःप्रजाइति। अनेतदुच्यते पार्वणैकोद्दिष्टयोरेकदिनसम्भवेकि-
म्पार्वणंपूर्वकर्त्तव्यमुतैकोद्दिष्टमिति तत्रैकआहुः। यद्येकत्रभवेत्ता-
वदेकोद्दिष्टन्तुपार्वणम्। पार्वणंत्वभिनिर्वर्त्य एकोद्दिष्टंसमाचरे-
दितिजावालोक्तत्वात्पूर्वंपार्वणमिति। तन्न। पाठार्थस्वरस-
त्वात् अतश्चैकोद्दिष्टंनिर्वर्त्यपार्वणंसमाचरेदितितत्रान्वयः।
तथाचवृद्धयाज्ञवल्क्यःएकादिकेसमुत्पन्ने पार्वणे चक्षयाहिके प्राक्
क्षयाहंप्रकुर्वीतपश्चात्पार्वणमेनपार्वणम्। अन्यच्च दर्शेक्षयाहश्चाह-
न्नेत्ययंकुर्वतियाज्ञिकाः। पूर्वंक्षयाहंनिर्वर्त्य पश्चाद्दर्शंसमाचरे-
त्। अथवापार्वणस्यपूर्वमुक्तिःपित्रोःपार्वणविषयः एकोद्दिष्टस्य-
पश्चादुक्तिःसपिण्डैकोद्दिष्टविषयेयुक्तमेव नचैकपाकेनश्राद्धद्वय-

माशङ्कनीयम् । एकपाके न यः कुर्यादेकोद्दिष्टञ्च पार्वणम् इत्य-
भेद्राम्यवाराहोविष्टाशीषप्रजस्मृतिरिति तेनैवोक्तत्वात् ।

## सू० परिचारकाएकादश्याम् ॥ १२ ॥

भवन्तीतिशेषः परिचारकादास्याद्युपजीविनः । उपलक्षणञ्चै-
तत् तथाचमनु. । एकादश्यान्तथारूप्यं ब्रह्मवर्चस्विनः सुतानिति
आयुरपि वेदार्थैवापुयात्सर्वोन्विप्राणांसंपदन्तथा । एकादश्यांपरं
स्थानमैश्वर्यमन्नातिन्नचेति । अत्रैतच्चिन्त्यते अपुत्रादीनामेकोद्दि
ष्टेतत्किन्तिथिनियमोस्ति नानवेति तत्रैकेचाहुः संबन्धिबान्धवा-
दीनामेकोद्दिष्टंमदैवहि । अपुत्रायेमृताकेचित्पुरुषावा स्त्रियोपिवा
तेषाममिचदेयंस्यादेकोद्दिष्टंनपार्वणम् । सपिण्डीकरणादूर्ध्वंयत्र
यत्रप्रदीयते । भ्रात्रे भगिन्यैपुत्रायस्वामिने मातुलायच मित्राय-
गुरवेश्राद्धमेकोद्दिष्टं महालयइति कात्यायनायस्त्रंवादि वचना
न्महालयेयत्तत्रापीति । तदयुक्तं तिथिनियमस्योक्तत्वात् तथाचपु-
राणसमुच्चये अपुत्राणाञ्च वन्धूनाञ्च स्त्रियाचार्ययोर्गुरोः । एकोद्-
दिष्टंसदाकार्यंपितृपक्षे विशेषतः । नपार्वणेऽधिकारोस्तियेषा
ञ्चन्यागतेरवौ । एकादश्यांतुकृष्णायां तेषांश्राद्धंसमाचरेत् अन्यच्च
एकादश्यांनकुर्वीत एकोद्दिष्टानिकृत्स्नशः । यस्माद्धिदैवतीविष्णुः
पितृवर्गस्यनित्यशः । वृद्धशातातपोपि पितृस्वस्मातृस्व स्रादिपितृ
व्यभ्रातृमातुलैः अनपत्यासुभार्यासु एकोद्दिष्टंसमाचरेत् । मातु-
लोभागिनेयाश्चस्वस्त्रीयोभ्रातृजस्तथा । श्वशुरश्चगुरुश्चैव सखामा-
तामहस्तथा एतेषाञ्चैवभार्याश्चस्वसुर्मातुः पितुस्तथा । श्राद्धमाव-
नुवर्तव्यमितिवेदविदांस्थितिरिति । भागिनेयःपितृव्यपुत्रीपुत्र-
इत्यपौनरुक्त्यं मातामहःसपत्नमातृ पितासाग्नेरप्यैकोद्दिष्टमेव ।

तथाचपुराणसमुच्चये अग्निमन्तोद्विजायोतु तेषांकन्यागतेरवौ । पितृव्यभ्रातृ बन्धूनामेकोद्दिष्टंप्रशस्यतइति ॥

## मू० धनधान्यम्पुत्त्रपशूनरौप्यं हिरण्यन्द्वादश्याम् ॥ १ ३ ॥

कर्त्तुःस्यादितिशेषः धनंरजतादि । तथाचमनुः द्वादश्यांजातरूपन्तुरजतंकुप्यमेवचेति । उपलक्षणञ्चैतत् तथाचवायुः द्वादश्यां जनलाभञ्चराज्यमाहुर्वसूनिचेति । यत्तुच्यते दैवशात्पित्रोः क्षयाहैक्येकथंक्रमइति । तत्कार्ष्णाजिनिः पित्रोःश्राद्धे चसम्प्राप्तेनवे पर्य्युपितेपिवा पितृपूर्वंसुतःकुर्यादन्यत्रासन्नियोगतः । अन्दलसपिण्डश्राद्धेषु चासत्तिःसंबन्धासत्तिःसंबन्धनैकट्यंक्रमेणत्यर्थः।तथाचवृद्धव्यगृह्यःभवेदादिसपिण्डानान्तन्त्रेणश्रपणन्तथा । संबन्धासत्तिमालोच्यतत्क्रमाच्छ्राद्धमाचरेदिति । ननुपित्रोःक्षयाहैक्येकपाकेनोतपृथक्पाकेनश्राद्धद्वयमिति ।सत्रैके एककालेगतासूनां बहूनामथवा द्वयोरित्यादिना एकपाकेनेत्याहुः । तदयुक्तम् तस्यएककालविषयत्वात् अन्यदैकदिनेतुपृथग्विधिः । तथाचपठन्ति मातापितृमृताहैक्यंकालेनापिभवेद्यदि । पृथक्पाकंपितृश्राद्धं मातुश्चतदनन्तरमिति सपिण्डाम्तुनृसिंहपुराणे । एकेनैवतुपाकेन सपिण्डानामशालये तन्त्रेणश्रपणङ्कुर्याच्छ्राद्धं दद्यात्पृथक्पृथगिति । विष्णुधर्मोत्तरेच प्रेतपक्षेगयायाञ्च गतासूनांसमेदिने । तन्त्रेणश्रपणङ्कुर्याच्छ्राद्धन्दद्यात्पृथक्पृथगिति ॥

## मू० कुप्यंज्ञातिश्रैष्ठ्यञ्चत्रयोदश्याम् ॥ १४ ॥

कर्त्तुः स्यादिति कुप्यंहेमरजतेभ्योन्यधातुजम् । उपलक्षणञ्चैतत्

तथाचमार्कण्डेयः । प्रजांमेधाम्पशून्पुष्टिम् स्वातन्त्र्यंदृढिमुत्तमाम् दीर्घमायुरथैश्वर्यं कुर्वाणस्तुत्रयोदशीमिति । ननुचत्रयोदश्यांकृष्णापक्षे यःश्राद्धं कुरुतेनरः । पञ्चत्वंतस्यजानीयाज्ज्येष्ठपुत्रस्य निश्चित-मिति चाङ्गिरसायाश्राद्धस्यैव प्रतिषिद्धत्वात्कथंफलश्रुतिरितिउच्यते सर्वैकवर्गश्राद्ध विषयत्वादित्यदोषः । तथाचकार्ष्णाजिनिः श्राद्धं-नैकस्यवर्गस्य त्रयोदश्यामुपक्रमेत् । अतुष्टाश्रयघ्रेऽस्य:प्रजांहिंसंति तत्रतद्वतिचत्रैतच्चिन्त्यते । किमनुगमनमृतानां स्वमृताहेश्राद्धं स्यादुतभर्तृमृताहइति । तत्रकेचिदाहुः मासपक्षतिथिस्पृष्टे यस्मि-न्यास्मियतेऽहनि । प्रत्यब्दंतत्तयाभूतंश्राद्धं तस्यतदिदुर्बुधा इति वचनात्स्वमृताहएवेति।तदयुक्तम् भर्तृक्षयाहेविहितत्वात् तथाच पुराणसमुच्चये अयत:पृष्ठतोवापितद्भक्त्या म्रियतेतुया । तस्याः श्राद्धम्प्रदातव्यम्भर्तुरेवक्षयेऽहनि । रेणुरपि एकचित्यांसमारूढाद्वि-तीयेऽह्निपतिव्रता । तस्या:पिण्डोदकम्पुत्रः प्रकुर्यात्पितृवासरे । पठन्तिच प्रत्यहेवापरोक्षेवातद्भक्त्याम्रियतेतुयः । तस्या:श्राद्धम्प्रकु-र्वीत भर्तुरेवक्षयेऽहनि । अत्रैतत्सन्दिह्यते भर्तृक्षयाहेकिमस्याःपृथ-क्पिण्डउतैक पिण्डेद्वयोरुद्देशः । तत्रलौगाक्षिः मृतेऽहनिसमासेन पिण्डनिर्वपणम्पृथक् । नवश्राद्धन्तुदम्पत्योरन्वारोहणएवतु अस्यार्थः। दम्पत्योरन्वारोहणेमृता हेसमासेनपिण्डनिर्वपणं नवश्राद्धम्पृथगित्य न्वयः नवश्राद्धंषोडशोपलक्षणम् । समासःपाकाद्यैक्यन्तुशब्दोविशेषः तत्तश्च दम्पत्योरेकचि तान्वारोहणे षोडशश्राद्धेष्वेवपृथक्पाकैः पिण्डोऽन्यत्र पाकैक्येनैकपिण्डेद्वयोरुद्देशः मृततिथ्योर्भिन्नत्वाद्विक प्रेतश्राद्धयोः पृथक्पिण्डएवेति । निश्चितप्रेतदिनेत्येव शब्दार्थः । त-थाच एकचित्यांसमारूढौ दम्पतीनिधनंगतौ । पृथक् श्राद्धन्तयो: । कुर्यादोदनञ्चपृथक्पृथगिति तथा । एकचित्यधिरोहेच तिथिरेकै

वजायते एकपाकेनैकपिण्डेद्वयो र्गृहीतनामनीइति देशकालद्रव्य-
देवकर्तॄं कोतान्विक्रोविधिरितिच । अतैके भर्तुःचयाईसर्वासामेव
पृथक्पिण्डइत्याहुः । तन्न तस्यपतिव्रताविषयत्वात् तथाभृगुः
यासमारोहणङ्कुर्याद्भर्तुश्चित्यांपतिव्रता । तांमृताहनिसंप्राप्ते पृथक्
पिण्डेनियोजयेत् । प्रत्यब्दञ्चनवश्राद्धं युगपत्तुसमापयेत् । अपिच
पुराणसमुच्चये । याकाचिन्म्रियतेनारी पत्यासहपतिव्रता तस्याः
श्राद्धंपृथक्कुर्यादेकोद्दिष्टंविधानतः । विधानतइति युगपत्समा-
पयेदितिच । भर्तुःचयाईपूर्वं भर्तुर्द्दिजोपवेशनंपश्चात्स्त्रिया इत्य-
वक्रमेण कदैवतसर्वं श्राद्धमित्यर्थः । पतिव्रातत्वात् तथा अपकेचि-
न्नचेच्छन्तिपृथक् श्राद्धन्तुयोषितां । यदग्निपतिनासार्धं मृढाक्तेनेम-
तेनतु सपिण्डीकरणादूर्ध्वं पृथक्कमविधीयते । नचाखिशानांतेषां
वेप्राद्यंशाक्रमजानतां पृथक्श्राद्धसमातॄणां कर्त्तव्यंयामदक्षिणा-
मिति । पठन्ति परदेशेष्वतोभर्तांसुत्वानारीपतिव्रता तिथिरेकावि-
शुद्धोस्यात्पिण्डन्दद्यात्पृथक्पृथगिति । अत्रविशेषः अनेकस्त्रीभिर-
नेकभृत्यैर्वास्वामिना सहस्तेहान्मरणे पार्थक्यं नैव स्वामिगोत्रे णैव
पृथक्पिण्डदानंकर्तव्यम् । तथाचपुराणसमुच्चये ब्रतानामथभृत्या-
नांभार्याणांपतिनासह । तस्तेणार्पणंकृत्वा श्राद्धंस्वामिक्षयेहनि
श्राद्धम्पृथक्पृथक्कुर्यात् स्वामिगोत्रेणतत्क्रमः । स्वामिचित्यधिरोहे
णभृत्याःतस्यस्वगोत्रतइति । भृगुरपि एककालेगतासूनां बहूना-
मथवाद्वयोः तन्त्रेणार्पणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक् । पूर्वंकस्य
मृतस्याद्दौद्वितीयस्यततः पुनः । तृतीयस्यततःकुर्यात् सन्निपातेत्व-
यंक्रमः पूर्वंकस्यमृतस्येति ज्येष्ठानुक्रमेणानधुना मुत्तमाधमक्रमेणे-
त्यर्थः । यत्त्वेकचित्यांसमारूढाविति वचनंपृथक्पिण्डदानमुक्तम
तदेकपतिव्रताविषयमित्यविरोधः । स्मृत्यर्थसारे सपत्नअपि-
ण्डश्राद्धादौ पार्थक्यन्नैवाहत्सर्व्यमिति ।

## मू० युवानस्तत्रम्रियन्ते शस्त्रहता-स्तुर्दश्याम् ॥ १५ ॥

युवानोयेम्रियन्तेतेशस्त्रहताश्च तत्रापरपक्षेचतुर्दश्यामेको-
द्दिष्टम्प्राप्नुवन्तीत्यर्थः । तथाचस्मृतिचन्द्रिकायां । चतुर्दश्यां-
तुयच्छ्राद्धं सपिण्डीकरणेकृते । एकोद्दिष्टविधानेन कुर्याच्छ-
स्त्रेणघातिनइत्यादि । मार्कण्डेयोपि युवानःपितरोयस्यमृताः श-
स्त्रेणवाहताः तेनकार्यंचतुर्दश्यान्तेपान्तृप्तिमभीप्सतेति । ननु-
चास्यशस्त्रहतस्यैवनान्यस्येति मिताक्षरादिनिबन्धकृद्भिर्नियमित-
त्वात्कथंयुवानइत्युक्तम । तत्रचहयाज्ञवल्क्यः । श्राद्धदामेचतु-
र्दश्यांविनाशस्त्रहतंमृतम् । ज्येष्ठपुत्रोविनश्येतपितृणाञ्चाप्यधो-
गतिरिति अतोयुवानइतिवयोदश्यांयोजनीयमितिचेन्नैवम् युव-
शब्दस्यविशेषादिनादंशसर्पहताद्युपलक्षकत्वात् । तथाचवृद्धयाज्ञ-
वल्क्यः । मृत्काष्ठोपललोहेषुविद्युद्व्यालविषादिभिः नखिदंष्ट्रिवि-
पन्नायेतेषांशस्ताचतुर्दशी जलादिषुविपन्नायेवन्हौयाकरकान्वि-
ताः पक्षिसर्पविपन्नायेतेषांशस्ताचतुर्दशी कण्ठपाशविपन्नायेयोगि
नीचापन्नमृत्युना लूताद्दष्टिविपन्नायेविषशापहताश्चये शीतवातवि-
पन्नायेशस्त्रघातहतास्तथा पापघ्नृशाहतायेचतेषांशस्ताचतुर्दशी ।
अथवायुवानस्तत्रम्रियन्तेइतिपाठस्तु वयतस्तयोदश्यांश्राद्धेप्रथमम्
तस्मात्सद्गृहेयुवानोनम्रियन्तइत्यर्थस्त्रयोदश्यामेव । तथाचमहा-
भारते जीतोनांतुत्तरैश्रेष्ठः कुर्याच्छ्राद्धन्त्रयोदशीम् नावश्यन्तुयुवानो-
स्यप्रमादायतनिग्रहइति शस्त्रहतइत्यत्रकारवन्तत्रैकपार्वणंसूचय-
ति तेनपित्रादित्रयेशस्त्रहतेपार्वणमित्यर्थः भवैकमाडुः । त्रया-
णामपिशस्त्रहतत्वे पृथक्पृथगेकोद्दिष्टमेवेति तदयुक्तम् । पार्वण-

स्ये वातिदेशात् तथाचस्मृतिदर्पणे एकस्मिन्वाद्वयोर्वापिविद्ध्यङ्क्ष्ले यवामृतौ एकोद्दिष्टं सुतःकुर्यात्तयाश्राद्धंगवद्भवेत् तथापिमादयस्तयोयस्त्वगस्त्वघाताद्यनुक्रमात् ससुतःपार्वणंकुर्यात्पित्रादेर्नपृथक्पृथगिति एकोद्दिष्टमितिशेषः स्मृतिचन्द्रिकायामपि । एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति तयाश्चांपार्वणमित्यर्थः अतएवाहुः । रणेसंमुखप्रहारैर्हतप्रराणामपिशस्त्रहतत्वाच्चतुर्दश्यामेवेति । तदयुक्तम् । तेषांपरमगतित्वात् तथाचपुराणसमुच्चये वितत्यरणयज्ञंयेगोब्राह्मणार्हितैषिणः स्वामिपादाग्रसंलग्नायांतिगस्ते खगडशः नतेशस्त्रहतैस्तुल्यापुराणज्ञैः कदाकृताः । नदतिर्यङ्कमायांतिप्रयांतिसुरमन्दिरम् । शूर्ंसेचावगाथेयंभार्गवांगिरसोर्मते द्वाविमौपुरुषौलोकेसूर्यमण्डलभेदिनौ परिव्राड्योगयुक्तश्चरणेचाभिमुखोहतइति । यत्तु म्रियन्ते पितरश्चास्ययेगस्त्रचरणेहताइतिमनुनाचतुर्दश्यामुक्तम् । तत्पराङ्मुखहतादिविषयमित्यविरोधः । नचसंमुखपराङ्मुखादिगस्त्रहतयोःसाम्यसूचनम् तस्मात्संमुखरणहतानांचतुर्दश्यांश्राद्धमेति । अतएवापवादापुराणसमुच्चये मृताश्चान्याश्वरङ्गगोब्राह्मणनिविर्गान्निवः मृताश्चपतिभिःसार्द्धं प्राप्तालोकं सनातनम् । नैताशस्त्रहतैस्तुल्याः पथात्याःपतिनासह म्रियन्तेपतिभक्त्यातुद्युम्नेकंप्राप्नुवन्तिता मवसन्यासिनांश्राद्धं कार्यं व्यन्वचतुर्दशी तपःसन्यासयोगेननतेयांतिपरांगतिं वेम्रियंत्यातुरत्वेनमृत्वन्त्यजगनांयुभिः नैवशस्त्रहतास्तेविषयस्यांतरर्गातिताः नशस्त्रहतिभिस्तुल्या आतुरत्वान्मृतायतः एतेषांनापमृत्युंसंपुराणज्ञावदन्तिहि अत्वातुरत्वान्मन्यासेनापश्रुतिविरोधनम् । यथाश्रूयतेगीतंपुराणज्ञैःपुरातनैः नचैदवचनाचारनलोकवचनादपि । मतिरुत्क्रमणीजातेप्रयागेमरणंप्रति

एतद्व्यतिरिक्तेऽन्यचतुर्दश्यां श्राद्धकरणेतत्रैवोक्तः जन्मांधपंगु-
विकलावाग्जडालुबुब्धुकाः नकुर्वंतिचयेश्राद्धकृष्णपक्षेचतुर्दशीम्
ज्ञात्वाशस्त्रहतान्बंधूंस्तेम्रियन्तेचिरायुषः प्रयांतिपरमंघोरन्तेपासे-
वह्निगस्थतद्गति नचैतेचतुर्दश्यामेवप्राप्नुवंतीतिवाच्यम् पिताम-
हाद्यर्थमिप्राप्तेः तथाचतत्रैव यदत्वापरणसार्यंमाग्वै योददातिच-
तुर्दशीम् पितृहाचोच्यतेसद्भिरिहलोकेपरत्रच तस्माच्छ्राद्धम्पितृ-
णान्तुप्राक्पश्चाच्चतुर्दशीम् दद्याच्छस्त्रहतेभ्यश्चइति प्राहपुराश्रु-
तिरितिच । चतुर्दश्याम्पूर्वमष्टम्यादौपश्चादमायामित्यर्थः । का-
त्यायनोपि शस्त्रादिभिर्हतस्यापि कुर्यात्प्रतिदिनंसुतः । पार्वणञ्च-
ष्णपक्षेतुवर्जयित्वाचतुर्दशीम् उशनाः । यदिकालान्तरेवापिय-
दाशस्त्राद्विपद्यते सोपिशस्त्रहतोज्ञेयः तस्यशस्ताचतुर्दशी इष्ट-
न्यतुः मघाख्येचतुर्दश्यां मघायांपुत्रवानपि पिण्डनिष्क्रमणं कु-
र्याच्छस्त्रहतः पिता । तथा कृष्णपक्षेचतुर्दश्याम्मघायु-
क्तांदिनयदि पिण्डनिर्वपणं कुर्यात्पुत्रार्थेन शस्त्रघातिनइति अत्र-
विशेषोविज्ञयाकृतकृत्ये नोक्तः । शस्त्रमृत्युः पितायस्यशस्त्रघातिपि-
तामहः । पार्वणन्तस्यविज्ञेयमन्वयस्तेनशस्त्रघातकः । यथाविहङ्गप-
क्षाभ्यामङ्गमाश्रित्यतिष्ठति तथापितामहश्चपितामहसमाश्रिता
वितितत्सदाचाराभावाच्चिन्त्यम् । यदात्वस्यामेवचतुर्दश्यांपित्रोः
क्षयाहस्तदापिप्रेतपक्षमृतस्यात्पार्वणमेवेतिकेचित् तन्न पारपाव्याः
पञ्चमेपञ्चेप्रेतास्येतुचयोयदि । पार्वणन्तत्रकुर्वीतवर्जयित्वाचतु-
र्दशीमिति गौतमोक्तेः । साग्निविषयंपार्वणस्येत्यविरोधः ॥

## मू० अमावास्यायाᳬ सर्वमित्यमावास्यायाᳬसर्वमिति ॥ १६ ॥

## * इति श्रीकात्यायनविरचितंश्राद्धसूत्रम् *

सर्वमितिसर्वकामाः यस्याममावास्यायां श्राद्धकरणेनसर्वकामां लभतइत्यर्थः। तथाचपुराणसमुच्चये श्राद्धंकुर्वन्नमावास्यांयत्नेनपुरुषः शुचिः सर्वान्कामानवाप्नोति तिथ्यान्तिथ्यामुदायुतइति। अस्या निरुक्तिस्तत्रैव। कलानामाप्यायनार्थंरविं विशतिचन्द्रमा सुषुम्ना-ख्याकलायासौसूर्यस्या नवमास्मृता। विशतिह्वौलवौतस्यांचन्द्रमाः सूर्यमण्डले। अमाच्चन्द्रस्यसंयोगादमावास्यां विदुर्बुधाइति। अप-रपक्षेश्राद्धासंभवेयमः। हंसेवर्षासुकन्यास्थेशाकेनापि गृहेवसन्। पञ्चम्योरन्तरेदद्यादुभयोरपिपक्षयोः। सुमन्तुः कन्यागतेसवितरि यावत्तिष्ठेद्विभावसुः। तावत्कालम्भवेद्देयं वृश्चिकंयावदागतम्। येयन्दीपान्वितोराजन् ख्यातापञ्चदशीभुवि। तस्यांदेयन्नचेद्दत्तं पितृणान्नैव मङ्गलंयइति। नवशुक्लापञ्चमी तुलासंक्रान्तिर्दीपामा-वास्या वृश्चिकसंक्रान्तश्चेतिपूर्वं पूर्वोसम्भवेउत्तरोत्तरा श्राद्धकालाः त्यर्थः। द्विरुक्तिमङ्गलार्था इतिशब्दःसमाप्तौ यत्वेतश्चिन्त्यते। [illegible] अथै [illegible] श्राद्धन्त्रिपिण्डकंकुर्यात् उतषट्पि-ण्डकमिति। तत्रैकेप्राहुः सपिण्डादिभ्योदातुमनधिकारात्त्रिपि-ण्डकमेवेति। तदयुक्तम् यथाऽश्राद्धं विनाषट्पिण्डकस्यापि वि-हितत्वात्। तथाच सभर्तृप्रभृतिभ्यः पितृभ्यश्चतथैवच विध-वाकारयेच्छ्राद्धम् यथाकालमतन्द्रितेति। षट्पिण्डकमित्यर्थः। कारयेदितिस्वार्थेणिच्। अधिकाराविषयेवा अपरेप्राहुः मृता-

स्त्राद्धमपिपत्नीकर्तृकं सर्वत्रपार्वणमेवेति । तथाचलौगाक्षिःस-पींभावेस्वयं पत्नीस्वभर्तुः श्राद्धममन्त्रकम् । सपिण्डीकरणं कुर्यात्सुतः पार्वणमेवचेति । सुमन्तुरपि अपुत्रेप्रस्थितेकर्तानास्तिचेच्छ्राद्धकर्मणि तत्पत्न्यापिकुर्वीत सपिण्डन्यार्वणन्तथेति । तदप्ययुक्तं अनयोर्वचनयोःक्षयाद्यव्यतिरिक्तविषयत्वाद्दर्शापरपक्षमृतिविषयत्वाद्वा तथाच भर्तुःश्राद्धन्त्रयानारीमौव्यात्पार्वणमाचरेत् । नतेनाप्यायतिभर्तासरवाच नरकंव्रजेदिति । पार्वणनिषेधस्यक्षयाद विषयत्वावगमात् । दर्शापरपक्षमृतौतुल्यन्यायत्वेन उचितत्वादित्यलमतिविस्तरेणेति भद्रम् ॥

श्रुतेरनेकविषयात् अनन्तत्वाच्चसर्वथा । तत्वंज्ञातुमशक्यत्वाद्-स्वबानस्यअल्पितैः ॥१॥ स्वबुद्धिकल्पितन्नेह वचनंलिखितंमया । दृष्टंश्रुतममृष्टंवा समूलम् मेनदूषणम् ॥ २ ॥ दृष्टंयच्चाल्पदौर्येषु निबन्धेषुचयद् तम् । श्रुतंप्रत्यविरुद्धं यत्तत्पठन्तोत्सुदाहृतम् । ३ ॥ प्रमाणमप्रमाणंवा सर्वज्ञः कर्तुमर्हति । दृष्टेश्रुतेचविज्ञामोमाहृशैः कर्तुमिष्यते ॥ ४ ॥ क्वापिचिन्वपिरत्नानः किमियता दोषोनिबन्धेभवेत् । सूरिश्चेद्धूना तमेरपिकृते यन्येकयत्नादरः ॥ इत्थं ये कापथगत्यनल्पमतय मागमत्पदौपक्षधीः यन्तो सन्तमिमन्नि मन्थसमिमं किंवा दौषमतो वदि ॥५॥ बाणव्योमेषुबिभ्वदे १५०५ यर्वकार्त्तिकमासके । कृष्णमिश्रोऽकृतग्रन्थं शुक्लपक्षेसंशुभम् ॥ ६ ॥

इत्याचार्यादिक श्रीमदनिरुद्धाश्रम श्रीविश्वेश्वरमिश्रसूनुना
कृष्णमिश्रकृतौ धर्माधिकायां पूर्वभौ
श्राद्ध प्रकरणं समाप्तम् ।
समाप्तश्चायं स्मृतिप्रदीपकाख्यग्रन्थः ॥

अपरपक्षे श्राद्धं कुर्वीतोर्द्ध्वं वा चतुर्थ्याः यदहः सम्पद्येत तदहर्ब्रा-
ह्मणानामन्त्र्य पूर्वेद्युर्वा स्नातकानेके यतीन् गृहस्थान् साधून्वा श्रोत्रि
यान्वृद्धाननवद्यान् स्वकर्मस्थानभावेऽपि शिष्यान्स्वाचारान् द्विनग्नशुक्ल-
विक्लिधः श्यावदन्तविद्धप्रजननव्याधितव्यङ्गिश्वित्रिकुष्ठिकुनखी-
वर्ज्जमनिन्द्यैरामन्त्रितो नापक्रामेदामन्त्रितो वान्यदन्नं प्रतिगृह्णी-
यात् स्नाताञ्छुचीनाचान्तान्प्राङ्मुखानुपवेश्य दैवे युग्मान्यथाशक्ति ।
पित्र्येऽयुग्मानेकैकस्योदङ्मुखान्द्वौ दैवे त्रीन्पित्र्ये एकैकमुभयत्र वा मा-
तामहानामप्येवन्तन्त्रं वा वैश्वदैविकं श्राद्धान्वितः श्राद्धं कुर्वीत शाके-
नापि नापरपक्षमति क्रामेन्मासि मासि वोऽशनमिति श्रुतेस्तदहः शुचि
रक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान्वर्ज-
येदावाहनादि वाग्यत ओपस्पर्शनादामन्त्रितश्चैवम् ॥१॥ दैवपूर्वं
श्राद्धम् पिण्डपितृयज्ञवदुपचारः पित्र्ये द्विगुणास्तु दर्भाः पवित्रपाणि
र्दद्यादासीनः सर्वं च प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वाऽऽसनेषु दर्भा
नास्तीर्य विश्वान्देवानावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो वि
श्वेदेवास आगतेत्यनयावाह्याऽवकीर्य विश्वेदेवाः शृणुतेममिति
जपित्वा पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञात उशन्तस्त्वे-
त्यनयावाह्यावकीर्यायन्तु न इति जपित्वा यज्ञियवृक्षचमसेषु पवि-
त्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो देवीरित्येकैकस्मिन्नेव यवा-
नावपति यवोऽसीत्येकैकस्मिन्नेव तिलानावपति तिलोऽसि सोमदेव-
त्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणा-
हि नः स्वाहेति सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणा-
मन्यतमेषु यानि वा विद्यन्ते पत्रपुटेषु वैकैकस्यैकैकेन ददाति सप-
वित्रेषु हस्तेषु या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पा-
र्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः
सुहवा भवन्त्विति असावेतत्ते अर्घ्य इति प्रथमे पात्रे संस्रवान्समवनी-
य पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधात्यत्र गन्धपुष्पधूपदीपा-

ससाश्वप्रदानम् । २ ॥ उद्धृत्यघृताक्तमन्नम् पृच्छत्यग्नौकरिष्यइति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवज्जुत्वाहुतशेषंदत्वापात्रमालभ्य-जपतिपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेअमृतेअमृतं जुहो मिस्वाहेतिवैष्णव्यर्चा यजुषावाङ्गुष्ठमन्नेवगाह्यापहताइति तिला-न्विकीर्योष्ण ठँ० श्विष्टमन्नन्ददाच्छक्त्यावाप्नत्सुजपेद्व्याहृति । पूर्वाङ्गायत्री ठँ० सप्रणवा ५ सकृत्त्रिर्वारचोमी. पितृमन्त्रान्पु-रुषसूक्तमप्रतिरथमन्यानिच पवित्राणितृप्तान्ज्ञात्वान्नम्प्रकीर्य सकृ-त्सकृद गोदत्वापूर्ववद्गायत्रीञ्चपित्वामधुमतीर्मधुमध्वितिचतृप्ताःस्थेति पृच्छतितृप्ताःस्मइत्यनुज्ञातः शेषमन्नमनुज्ञाप्यसर्वमन्नमेकतोधृ-त्योच्छिष्टसमीपेदर्भेपुत्रीस्त्रीणिपिण्डानवनेज्यदद्यादाचान्तेष्वित्येके-माचान्तेपूदकं पुष्पाण्यक्षतानक्षय्योदकञ्चदद्यादघोराः पितरः सन्तुसंन्त्वित्युक्ते गोत्रन्नोवर्द्धतांवर्द्धतामित्युक्ते दातारोनोभिवर्द्ध-न्तांवेदाः सन्ततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयञ्चनोस्त्वित्या-शिषः प्रतिगृह्यस्वधावाचनीयान्सपवित्रान्कुशानास्तीर्यस्वधांवाच-यिष्यइति पृच्छतिवाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तुस्वधेत्युच्यमानेस्वधावाचनीयेष्वपोनिषिञ्चत्यु-त्तमित्युत्तानम्पात्रङ्कृत्वायथाशक्ति दक्षिणान्ददाद्ब्राह्मणेभ्योविश्वे-देवाः प्रियन्तामितिदैवेवाचयित्वावाजेवाजेवतेति विसृज्यामा वाजस्येत्यनुव्रज्यप्रदक्षिणीकृत्योपविशेत् ॥३॥ अथैकोद्दिष्टमेकोर्घंए-कम्पवित्रमेकःपिण्डोनावाहनंनाग्नौकरणन्नात्रविश्वेदेवाः स्वदि-तमितितृप्तिप्रश्नः सुस्वदितमितीतरेब्रूयुरुपतिष्ठतामित्यक्षय्यस्था नेऽभिरम्यतामितिविसर्गोभिरताःस्मइतीतरे ॥ ४ ॥ ततः संवत्सरे पूर्णेत्रिपक्षेद्वादशाहेवा यदहर्वावृद्धिरापद्येतचत्वारिपात्राणिसति-लगन्धोदकानिपूरयित्वात्रीणिपितृणामेकम्प्रेतस्य प्रेतपात्रम्पितृ-पात्रेष्वासिञ्चतियेसमानाइतिद्वाभ्यामेतेनैव पिण्डोव्याख्यातोत-

कर्ॅ ठं॰ संवत्सरे सम्वत्सरे प्रेतायान्नन्दद्याद्यस्मिन्नहनि प्रेतः
स्यात् ॥ ५ ॥ आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रव-
र्जंजपऋजवोदर्भायवैस्तिलार्थाः सम्पन्नमितितृप्तिप्रश्नः सुसम्पन्न-
मितीतरे ब्रूयुर्दधि बदराक्षतमिश्राः पिण्डानान्दीमुखान्पितॄनावा-
हयिष्यइतिपृष्ट्वावाहयेत्यनुज्ञातोनान्दीमुखाःपितरःप्रीयन्तामि
त्यक्षय्यस्थानेनान्दीमुखान्पितॄन् वाचयिष्यइतिपृष्ट्वावाच्यतामि-
त्यनुज्ञातोनान्दीमुखाः पितरःपितामहाःप्रपितामहामातामहाप्र-
मातामहावृद्धप्रमातामहाश्चप्रीयन्तामितिनस्वधांप्रयुञ्जीतयुग्माना-
शयेदत्र ॥ ६ ॥ अथतृप्तिर्ग्राम्याभिरोषधीभिर्मासंतृप्तिस्तदभावआ-
रण्याभिर्मूलफलैरोषधीभिर्वासहान्नेनोत्तरास्तर्पयन्ति छागोस्रमेषा
नालब्ध्वाक्रीत्वालब्ध्वावास्वयं मृतानाहृत्यपचेन्मासद्वयन्तुमत्स्यैर्मा-
सत्रयन्तुहारिणेनचतुरश्चौरभ्रेणपञ्चशाकुनेनषट्छागेनसप्तकौर्मे-
णाष्टौवाराहेणनवमेषमाꣳसेनदशमाहिषेणैकादशपार्षतेनसंव-
त्सरन्तुगव्येनपयसापायसेनवावार्ध्रीणसमाꣳसेनद्वादशवर्षाणि ॥ ७ ॥
अथाक्षय्यतृप्तिः खड्गमाꣳसंकालशाकंलोहच्छागमाꣳसंमधुमहाश-
ल्कोवर्षासुचमघाश्चाद्यर्ठं॰हस्तिच्छायायांचमन्त्राध्यायिनःपूताशाखा-
ध्यायिषडङ्गविज्ज्येष्ठसामगोगायत्रीसारमात्रोपिपञ्चाग्निः स्नात-
कस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णोद्विजाग्र्यपाठकोनाम्नोढापुत्रश्चेतिपंक्ति
पावनावागीश्वरो याज्ञिकश्चनियोज्यावभावेत्वेकोपिवेदविद्पंक्ति-
मूर्द्धनिनियुञ्ज्यादामहस्मात्पंक्तिंपुनातीतिवचनात् ॥ ८ ॥ अथका-
म्यानिभवन्ति स्त्रियोप्रतिरूपाःप्रतिपद्द्वितीयायाꣳस्त्रीजन्माऽश्वास्तृ-
तीयायांचतुर्थ्यांक्षुद्रपशवःपुत्राःपञ्चम्यांद्युतर्द्धिःषष्ठ्यांकृषिःसप्तम्यां
वाणिज्यमष्टम्यामेकशफान्नवम्यांदशम्यांगावः परिचारकाएका-
दश्यांधनंधान्यंद्वादश्यांपुत्रपशून्रौप्यं हिरण्यंकुप्यंज्ञातिश्रैष्ठ्यंत्र-
योदश्यांयुवानस्तत्रम्रियन्तेशस्त्रहतस्यचतुर्दश्याममावास्यायाꣳ स-
र्वमित्यमावास्याꣳसर्वमिति ॥ ९ ॥

इतिश्राद्धकल्पसूत्रंकात्यायनाचार्यकृतम्परिशिष्टंसमाप्तम् ।

## अथ पार्वण श्राद्धस्या नुक्रमणिका ॥

सेक.प्रतिज्ञागायत्रीदेवताभ्यस्तथासनम् आवाहनार्घदाना-
निगन्धादीनांसमर्पणम् ॥ १ ॥ मण्डलान्याकृतद्विचाग्नौभूस्वा-
मिनेतथा परिवेषोमधूत्सर्गापात्रालम्भोन्नदानकम् ॥ २ ॥ मन्त्र-
हीनचगायत्रीमधुवातांततोजपेत् विकाराचमनश्चायगायत्रीम-
धुवेतिच ॥ ३ ॥ वेदिकांचतत.कुर्यात्स रेखोल्लेखनकंतथा उल्मुक-
भ्रामणञ्चायरेखयो:कुशधारणम् ॥ ४ ॥ देवताभ्यस्तथापिण्डस्था-
नेतत्रावनेजनम् पिण्डदानमुपस्पर्शोहि:खुम्सयमनन्तथा ॥ ५ ॥
पिण्डोपरिप्रत्यवनेजनन्नीव्याश्वश्रंसनं सूत्रदानम्पिण्डपूजाजलपु-
ष्पाचतान्चिपेत् ॥ ६ ॥ अच्चय्यवादोवार्धारागोत्राशी:प्रार्थनन्तत:
पितृप्रीणनमाघ्राणम्पिण्डोत्थापनकन्तथा ॥ ७ ॥ चालनञ्चार्घपा-
त्राणांदचिणा चविसर्जनं देवताभ्योजपोरचादीपनिर्वापनंतत: ॥
८ ॥ आचम्य चततोब्रूयात्प्रमादात्कुर्वतमिमि एष.पार्वणश्राद्ध-
स्यानुक्रम.कथितोबुधै: ॥ ९ ॥

इति पार्वण श्राद्धस्यानुक्रमणिका ॥

